अप्रति नंदिताअनादृतासतीनादत्तनगृहीतवती कथंसौदर्येणसोदरत्वेनभगिनीनांयःसंप्रश्नः तत्रसमर्थायोग्यायावार्तातयासह
तांचनादत्तनाशृणोदित्यर्थः ८ नविद्यतेरुद्रस्यभागोयस्मिंस्तम् देवेरुद्रेकृतंहेलनमवज्ञाआव्हानाद्यकरणात् ९ जगर्हनिंदितवतीअ
मर्षणकोपेनविपन्नाअव्यक्तातयाशिवंद्वेष्टिइतिशिवद्विट्तम् धूमपथः कर्ममार्गस्तत्रश्रमोऽभ्यासस्तेनस्मयोगर्वोयस्यदक्षवधा
यसमुत्थितान् स्वाज्ञयानिगृह्यनिवार्य १० निंदामेवाह नयस्येतित्रयोदशभिः मुक्तवैरकेत्यक्तविरोधेतस्मिन्शिवेभवंतमृतेविना
कतमःप्रतीपयेत् प्रतिकूलमाचरेत् वैराभावेहेतवः यस्यलोकेअतिशायनः अतिशयितोनास्ति तथाप्रियश्चाप्रियश्चनास्ति समा
सपाठे अतिशयेनप्रियोनास्ति देहभृतांप्रियोऽयमात्मातस्यसमस्तस्यात्मनिकारणभूतेसमस्तरूपइतिवा ११ तस्यचप्रतिकूलक

सौदर्यसंप्रश्नसमर्थवार्तयामात्रान्वमातृष्वसृभिश्चसादरम् दत्तांसपर्यांवरमासनंचसानादत्तपित्राऽप्र
तिनंदितासती ८ अरुद्रभागंतमवेक्ष्यचाध्वरंपित्राचदेवेकृतहेलनंविभौ अनादृतायज्ञसदस्यधीश्व
रेचुकोपलोकानिवधक्ष्यतीरुषा ९ जगर्हसाऽमर्षविपन्नयागिराशिवद्विषंधूमपथश्रमस्मयम् स्वतेज
साभूतगणान्समुत्थितान्निगृह्यदेवीजगतोऽभिशृण्वतः १० श्रीदेव्युवाच नयस्यलोके
ऽस्त्यतिशायनःप्रियस्तथाऽप्रियोदेहभृतांप्रियात्मनः तस्मिन्समस्तात्मनिमुक्तवैरकेऋतेभवंतंकत
मःप्रतीपयेत् ११ दोषान्परेषांहिगुणेषुसाधवोगृण्हंतिकेचिन्नभवादृशाद्विज गुणांश्चफल्गून्ब-
हुलीकरिष्णवोमहत्तमास्तेष्वविदद्भवानघम् १२

रणंद्वेधा महत्तमद्रोहेणसाक्षात्तद्द्रोहेणच तत्रपुरुषाणांचातुर्विध्यंवदंतीमहत्तमद्रोहमाह दोषानितिद्वाभ्याम् हेद्विजेत्यधिक्षे
पः भवादृशाः त्वद्विधाः असूयकाः परेषांगुणेषुदोषानेवगृण्हंति नतुगुणान् केचिन्मध्यस्थागुणेषुदोषान्नगृण्हंति किंतुयथास्थि-
तान्गुणदोषान् विवेकेनगृण्हंति तेतुमाहांतउच्यंते साधवस्तुकेवलंगुणानेवगृण्हंतिनदोषान् तेतुमहत्तराउच्यंते महत्तमास्तुदोषा
न्नगृण्हंत्येव तेचप्रत्युतफल्गून्तुच्छानपिगुणान्बहुलीकुर्वंति इतिकरिष्णवोभवंतितेषुभवान् अघमविदत् विदितवान् कल्पितवा
नित्यर्थः तच्चब्रह्मिष्ठानभिभूयकल्पितवानित्यनेनसूचितम् १२ ७ ७ ७ ७

एतच्चदुर्जनेषुयुक्तमेवेत्याह नेति कुणपंजडंशरीरंनदेवआत्मेतिवदंतियेतेषु ईर्ष्याअक्षांतिः सेर्ष्यंयथाभवत्येवंमहतांविनिंदेतियत् एतदाश्चर्यंनभवति सेर्ष्यंनिरस्तंतेजः प्रभावोयेषामितिवा यद्यपिमहापुरुषाः स्वनिंदांसहंतेनथाऽपितत्सादरेणवस्तदसहमानाः ते षांतेजोनिरस्यंति अतोऽशक्तेषुमहन्निंदनमेवोचितमित्यर्थः ९२ तदेवंमहत्तमद्रोहमुक्त्वातस्मिन्नेवकृतंद्रोहमाह यदितिद्वाभ्याम् यदस्यद्व्यक्षरमात्रंशिवइति तत्प्रसिद्धंनामनृणांसर्वेषामाशुअघंसर्वंहंति केवलंगिरेर्वैरिनमुच्चारितंनतुमनः पूर्वकंतत्तुसकृदपिप्र- संगादपितंशिवंद्वेष्टि नलंघ्यंशासनमाज्ञायस्य अहोशिवेतरः अमंगलरूपः १४ पापहरत्वमुक्त्वाभक्तिमुक्तिप्रदत्वेनशिवंवर्णयंत्या

नाश्चर्यमेतद्यदसत्सुसर्वदामहद्विनिंदाकुणपात्मवादिषु सेर्ष्यंमहापूरुषपादपांसुभिर्निरस्ततेजः सुतदेवशोभनम् १३ यद्व्यक्षरंनामगिरेरितंनृणांसकृत्प्रसंगादघमाशुहंतितत् पवित्रकीर्त्तिंतमलं घ्यशासनंभवानहोद्वेष्टिशिवंशिवेतरः १४ यत्पादपद्मंमहतांमनोऽलिभिर्निषेवितंब्रह्मरसासवार्थि भिः लोकस्ययद्वर्षतिचाशिषोऽर्थिनस्तस्मैभवान्द्रुह्यतिविश्वबंधवे १५ किंवाशिवाख्यमशिवंन- विदुस्त्वदन्येब्रह्मादयस्तमवकीर्यजटाःश्मशाने तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्येमूर्द्धभिर्दधति- तच्चरणावसृष्टम् १६ ५ ५ ५ ५ ५ ५

ह यस्यपादपद्मंमनांस्येवालयस्तैः ब्रह्मरसोब्रह्मानंदः सएवासवोमकरंदः तदर्थिनः यच्चार्थिनः सकामस्यताआशिषोवर्षति १५ यदुक्तंशिवापदेशोह्यशिवइतियच्चोक्तंप्रेतावासेष्वित्यादि तदाक्षिपंत्याह किंवेति योजटाअवकीर्यश्मशानेअवसत् वसतिस्म तस्यश्मशानमाल्यानिभस्मानिनृकपालानिचभूषणत्वेनसंतियस्यतंत्वत्तोऽन्येनविदुः किंतेविदंत्येवेतिचेत् नतथासतितेषांतद्दास्यानु पपत्तेरित्याह तच्चरणादवसृष्टंगलितंनिर्माल्यंमूर्धभिर्धारयंति १६ ५ ५ ५ ५

इदानींदेहंत्यक्तुकामाधर्मतत्त्वमाह कर्णाववाच्छाद्यनिर्गच्छेत् यद्यदिमर्त्तुंमारयितुंवाकल्पोनभवति कदा धर्मावितरिधर्मरक्षकेईशेस्वामिनि असृणिभिर्निरंकुशैर्नृभिरस्यमाने ऽधिक्षिप्यमाणेप्रभ्रः शक्तश्चेत् रुशतीमकल्याणवादिनींप्रसह्यबलात् छिंद्यात् ततोऽपिस्वयंप्राणान् विसृजेदिति यत्सधर्मः १७ तवत्वत्तःउत्पन्नम् शितिकंठोनीलकंठः तन्निंदकात् प्रमादादापन्नस्यापवित्रस्यत्यागंविनानशुद्धिरितिदृष्टांतेनाह जग्धस्यभक्षितस्यान्नस्योद्धरणंवमनमेवपुंसः विशुद्धिंप्रचक्षते १८ यदुक्तंलुप्तक्रियायाशुच यइतितत्स्मृत्याह नेति वेदवादान् विधिनिषेधरूपान् स्वएवलोकेस्वात्मन्येवरममाणस्यमहतोमुनेःसम्यक् विरक्तस्यमतिर्नानुवर्त्ततेनिवृत्ताधिकारत्वात् अधिकारभेदेदृष्टांतः यथादेवानांगतिराकाशएवमनुष्याणांपृथिव्यामेव अतः स्वेएवधर्मेप्रवृत्तिलक्षणेनि

कर्णौपिधायनिरयाद्यदकल्पईशेधर्मावितर्यसृणिभिर्नृभिरस्यमाने छिंद्यात्प्रसह्यरुशतीमसतींप्रभ्रश्चेज्जिव्हामसूनपिततोविसृजेत्सधर्मः १७ अतस्तवोत्पन्नमिदंकलेवरंनधारयिष्येशितिकंठगर्हिणः जग्धस्यमोहाद्धिविशुद्धिमंधसोजुगुप्सितस्योद्धरणंप्रचक्षते १८ नवेदवादाननुवर्त्ततेमतिःस्वएवलोकेरमतोमहामुनेः यथागतिर्देवमनुष्ययोःपृथक्स्वएवधर्मेनपरंक्षिपेत्स्थितः १९ कर्मप्रवृत्तंचनिवृत्तमप्यृतंवेदेविविच्योभयलिंगमाश्रितम् विरोधितद्यौगपदैककर्तरिद्वयंतथाब्रह्मणिकर्मनर्छति २०

वृत्तिलक्षणेवास्थितःसन् परमन्यधर्मेषुरुषंवानक्षिपेत् ननिंदेत् व्यवस्थिताधिकारत्वेनोभयोःसत्यत्वात् नक्षिपेदेवेतिवाऽन्वयः १९ एतदेवोपपादयंत्याह प्रवृत्तमग्निहोत्रादि निवृत्तंशमदमादि ऋतंसत्यमेव यतः वेदेआश्रितंविहितम् तच्चविविच्यव्यवस्थयाश्रितमृतत्वविशेषेणाव्यवस्थामेवाह उभयंरागवैराग्यलक्षणम् लिंगंचिन्हमधिकारिविशेषणंयस्मिन्तत् ननुयावज्जीवमग्निहोत्रंजुहोति शांतोदांतइत्यादिषुनैवंव्यवस्थाप्रतीयते सत्यम् तथाऽप्युभयोरेकाधिकारविरोधात्तथापर्यवस्यतीत्याह युगपद्भावोयौगपदंयौगपद्येनैकस्मिन् कर्तरितत्कर्मद्वयंविरोधि ननुतर्हिनिवृत्तंकर्मशिवेनापिकर्तव्यमेवनेत्याह ब्रह्मणिसदाशिवेकिंचिदपिकर्मनऋच्छतिप्राप्नोति अतोयथाप्रवृत्तनिवृत्तयोःपरस्परधर्माकरणेनदोषः तथेश्वरेएतदुभयधर्माकरणेऽपीतिभावः २० ६९

चिंताभस्मकृतस्नानः तथानग्नइत्यादिनायोभोगाद्यभावउक्तस्तत्राह हेपितः अस्माभिरास्थिताः आश्रिताः पदव्यः अणिमादिसमृद्धयः
वोयुष्माकंमानसंतीत्यर्थः यतोवः पदव्योयज्ञशालास्वेवभवंति ताश्चतदन्नेनयज्ञगतेनान्नेनतृप्तैः केवलमीडिताधूमवर्त्मभिश्चभुज्यं
ते याअस्मत्पदव्यस्तास्तुनैवंभूताः किंत्वव्यक्तलिंगाः नव्यक्तंलिंगंहेतुर्यासाम् इच्छामात्रप्रभवत्वात् अवधूतैः ब्रह्मविद्भिः सेविताः
अतोऽहमाढ्योरुद्रोदरिद्रइतिगर्वंमाकृथाइतिभावः २१ किंबहुनोक्तेनइदंदेहंत्वस्याम्येवेत्याह द्वाभ्याम् एतेनालंनपूर्यतेकिम् अ
पितुअलमेव कथंभूतेन कुजन्मना तदेवाह हरेकृतापराधस्यतवदेहादुद्भूतेनउत्पन्नेन ननुश्लाघ्योऽयंदेहः कथंत्याज्यस्तत्राह कुजनस्य
नवप्रसंगतः संबंधात् ममलज्जाऽभूत् अतोयोमहतामप्रियकर्तातस्मात् यज्जन्मतद्धिक् त्वत्संबंधादश्लाघ्यमित्यर्थः २२ किंच परि

मावः पदव्यःपितरस्मदास्थितायायज्ञशालाकृतधूमवर्त्मभिः तदन्नतृप्तैरसुभृद्भिरीडिताअव्यक्त
लिंगाअवधूतसेविताः २१ नैतेनदेहेनहरेकृतागसोदेहोद्भवेनालमलंकुजन्मना व्रीडाममाभूत्कु
जनप्रसंगतस्तज्जन्मधिक्योमहतामवद्यकृत् २२ गोत्रंत्वदीयंभगवान्वृषध्वजोदाक्षायणीत्याह
यदासुदुर्मनाः व्यपेतनर्मस्मितमाशु तत्त्यहंव्युत्स्रक्ष्यएतत्कुणपंत्वदंगजम् २३ मैत्रेयउवा
च इत्यध्वरेदक्षमनूद्य शत्रुहन्क्षितावुदीचींनिषसादशांतवाक् स्पृष्ट्वाजलंपीतदुकूलसंवृता
निमील्यदृग्योगपथंसमाविशत् २४ कृत्वासमानावनिलौजितासनासोदानमुत्थाप्यचनाभिचक्र
तः शनैर्हृदिस्थाप्यधियोरसिस्थितंकंठाद्भ्रुवोर्मध्यमनिंदिताऽनयत् २५

हासादिषुविनोदेनापिदाक्षायणीतिसंबोधयन् त्वदीयंत्वत्संबंधवाचकंगोत्रंनामयदावृषध्वजआह गृण्हातितदाऽहंव्यपेतनर्मस्मितं
यथाभवत्येवंसुदुर्मनाअतिदुःखितचित्ताभवामि तस्माद्धिनिश्चितमेतत् कुणपप्रायंव्युत्स्रक्ष्येत्यक्ष्यामि २३ दक्षंप्रत्यनुवादंकृत्वा
शत्रुहन् क्रोधादिरिपुघातिन् उदीचीमुदीच्यांदिशिपादांतरेउदङ्मुखीशांतवाक् गृहीतमौनाजलंस्पृष्ट्वा आचम्यदृक्दृशम् २४ यो
गमार्गमेवाह कृत्वेति अनिलौप्राणापानावूर्ध्वाधोवृत्तिकौनिरोधेनसमानौएकरूपौनाभिचक्रेकृत्वातनउदानमुत्थाप्यधियासहहृ
दिस्थापयित्वाकंठमार्गेणभ्रुवोर्मध्यमनयत् २५ ५ ५ ५ ५ ५

महत्तमं पूज्यतमेन श्रीरुद्रेण २६ चरणांबुजे आसवं भजनानंदम् भर्तुरपरं न ददर्श देहश्च सद्यः प्रज्वलितोऽभूत् समाधिना योऽग्निस्तेन २७ खे भुवि च हाहेत्यादिवादः तमेवाह हंतेति विषादे दैवतमस्य पूज्यतमस्य प्रिया केन दक्षेण प्रकोपिता सती २८ महदनात्म्यं दौर्जन्यम् अस्य सर्वत्र स्नेह एव न्याय्य इत्याहुः यस्येति येन विमता अवज्ञाता २९ दुर्मर्षमत्यसहनं हृदयं यस्य लोके जनमध्ये च शब्द

एवं स्वदेहं महतां महीयसा मुहुः समारोपितमंकमादरात् जिहासती दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम् २६ ततः स्वभर्तुश्चरणांबुजासवं जगद्गुरोश्चिंतयती न चापरम् ददर्श देहो हतकल्मषा सती सद्यः प्रजज्वाल समाधिजाग्निना २७ तत्पश्यतां खे भुवि चाद्भुतं महद्धाहेति वादः सुमहानजायत हंत प्रिया दैवतमस्य देवी जहावसून्केन सती प्रकोपिता २८ अहो अनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य चराचरं प्रजाः जहावसून्यद्विमतात्मजा सती मनस्विनी मानमभीक्ष्णमर्हति २९ सोऽयं दुर्मर्षहृदयो ब्रह्मध्रुक्च लोकेऽपकीर्तिं महतीमवाप्स्यति यदंगजां स्वां पुरुषद्विडुद्यतां न प्रत्यषेधन्मृतयेऽपराधतः ३० वदत्येवं जने सत्या दृष्ट्वासुत्यागमद्भुतम् दक्षं तत्पार्षदा हंतुमुदतिष्ठन्नुदायुधाः ३१ तेषामापततां वेगं निशम्य भगवान्भृगुः यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ३२ अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ३३ तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः हन्यमाना दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ३४ इति श्रीभागवते महापुराणे चतुर्थस्कंधे सतीदेहोत्सर्गो नाम चतुर्थोऽध्यायः ४

न्नरकं च यद्यतः स्वीयामंगजां सुताम् अपराधतः स्वावज्ञया मृतये मरणाय उद्यतां न निवारितवान् पुरुषद्विट् शिवद्वेषी ३० अद्भुतं च दृष्ट्वा ३१ यत् यज्ञघ्नान् हंतीति यज्ञघ्नघ्नं तेन अपहत रक्ष इत्यादिना ३२ अध्वर्युणा भृगुणा ये तपसा सोमं प्राप्ताः ऋभवो नाम देवा उत्थिताः ३३ ब्रह्मतेजसा उशद्भिर्देदीप्यमानैः ३४ इति चतुर्थे टीकायां चतुर्थोऽध्यायः ४ ६२ ६२

पंचमेतु सतीदेहत्यागमाकर्ण्यशंकरः वीरभद्रंरुषोत्पाद्य तेनदक्षमघातयत् १ प्रजापतेर्हेतोर्निधनम् कुतः तेनासत्कृतायाः तस्याध्वरेऽस्म
भवोदेवास्तैः १ सधूर्जटिः रुद्रः घोरः सन् जटामुत्कृत्योत्पाद्योत्थितःसन् तांभ्रविविससर्ज रुदष्ट ओष्टपुटोयेन तडितांवन्हीनांचस
टाज्वालास्तद्वदुग्रम् रोचिर्यस्यास्ताम् २ ततोजटायाःसकाशात् अतिकायोवीरभद्रोजात इतिशेषः तनुवानन्वादेहेनदिवंस्पृशंतम्
अत्युच्चइत्यर्थः घनरुक् कृष्णवर्णः त्रयः सूर्याइवदृशोयस्य करालास्तंगादंष्ट्रायस्य ज्वलदग्निरिवमूर्धजायस्य कपालमालायुक्तः विवि

मैत्रेयउवाच भवोभवान्यानिधनंप्रजापतेरसत्कृतायाअवगम्यनारदात् स्वपार्षदसैन्यंचत
दध्वरर्भुभिर्विद्रावितंक्रोधमपारमादधे १ क्रुद्धःसुदष्टौष्ठपुटःसधूर्जटिर्जटांतडिद्वन्हिसटोग्ररोचि
षम् उत्कृत्यरुद्रःसहसोत्थितोहसन्गंभीरनादोविससर्जतांभुवि २ ततोऽतिकायस्तनुवास्पृश
न्दिवंसहस्रबाहुर्घनरुक्त्रिसूर्यदृक् करालदंष्ट्रोज्वलदग्निमूर्धजःकपालमालीविविधोद्यतायुधः ३
तंकिंकरोमीतिगृणंतमाहबद्धांजलिंभगवान्भूतनाथः दक्षंसयज्ञंजहिमद्भटानांत्वमग्रणीरुद्र
भटांशकोमे ४ आज्ञप्तएवंकुपितेनमन्युनासदेवदेवंपरिचक्रमेविभुम् मेनेतदात्मानमसंगरंहसा
महीयसांतातसहःसहिष्णुम् ५ अन्वीयमानःसहरुद्रपार्षदैर्भृशंनदद्भिर्व्यनदत्सुभैरवम् उद्यम्य
शूलंजगदंतकांतकंसप्राद्रवद्घोषणभूषणांघ्रिः ६ अथर्त्विजोयजमानःसदस्याःककुभ्युदीच्यांप्रस
मीक्ष्यरेणुम् तमःकिमेतत्कुतएतद्रजोऽभूदितिद्विजाद्विजपत्न्यश्चदध्युः ७

धान्युद्यतान्यायुधानियस्य ३ हेरुद्र हेभटयुद्धकुशल मद्भटानांत्वमग्रणीःसन् सयज्ञंदक्षंजहि ब्रह्मतेजोदुर्जयमितिमाऽमंस्थाः
यतस्त्वंमेअंशकः ४ मन्युनारुद्रेण परिचक्रमे प्रदक्षिणीचकार असंगमप्रतिघातंयत् रंहोवेगःतेन भोतात महीयसांबलीयसामपिस
हः सहिष्णुम् बलंसोढुंक्षमंमेने ५ जगदंतकोमृत्युः तस्याप्यंतकंशूलम् घोषयंतिशब्दंकुर्वंतीतियोषणानिनूपुरादीनिभूषणानि-
ययोस्तादृशावंघ्रीयस्यसः ६ ककुभिदिशितमोनभवति किंतु रजइतिज्ञात्वाहुः रजएतत्कुतोऽभूत् दध्युः चिंतयामासुः ७ ६२

हेत्वंतरासंभवेनोत्पातिकं कल्पयंति धाताइति दस्यूनामभावेहेतुः प्राचीनबर्हिस्तदानींतनोराजाजीवतीतिनकाल्यंतेनेनशीघ्रंनीयंते ८ प्रसूतिर्दक्षपत्नीसामिश्रामुख्यायासाम् विपाकः फलम् पश्यंतीनामिति तस्यादुःखाधिक्येहेतुः अवदध्यौ अवज्ञातवान् अनागामनागसम् ९ नचेदंस्कृताऽवज्ञामात्रंकिंतुरुद्रावज्ञानंच अतोनास्यभद्रंभविष्यतीत्याहुः यस्त्विति द्वाभ्याम् धुतोविकीर्णोजटाकलापोयस्य स्वशूलस्यसृच्यामग्रेअर्पिताः दिग्गजेंद्रायस्यउदितान्युन्नमितानि अस्त्राणियैस्तेदोषोबाहवएवध्वजास्तान्वितत्यहर्षेणनृत्यति उच्चः अट्टहासः कठोरोहासएवस्तनयित्नुर्गर्जितंतेनभिन्नादीर्णादिशोयस्यसः अमर्षयित्वा असहनयुक्तंकृत्वामन्युप्लुतंक्रोधव्याप्तम् उदस्तः

वाताःनवांतिनहिंसंतिदस्यवःप्राचीनबर्हिर्जीवतिहोग्रदंडः गावोनुकाल्यंतइदंकुतोरजोलोकोऽधुनाकिंप्रलयायकल्पते ८ प्रसूतिमिश्राःस्त्रियउद्विग्नचित्ताऊचुर्विपाकोवृजिनस्यैषतस्य यत्पश्यंतीनांदुहितॄणांप्रजेशःसुतांसतीमवदध्यावनागाम् ९ यस्त्वंतकालेव्युप्तजटाकलापःस्वशूलसूच्यर्पितदिग्गजेंद्रः वितत्यनृत्यत्युदितास्त्रदोर्ध्वजानुच्चाट्टहासस्तनयित्नुभिन्नदिक् १० अमर्षयित्वातमसह्यतेजसंमन्युप्लुतंदुर्विषहंभ्रुकुट्या करालदंष्ट्राभिरुदस्तभागणंस्यात्स्वस्तिकिंकोपयतोविधातुः ११ बह्वेवमुद्विग्नदृशोच्यमानेजनेनदक्षस्यमुखेमहात्मनः उत्पेतुरुत्पाततमाःसहस्रशोभयावहादिविभूमौचपर्यक् १२ तावत्सरुद्रानुचरैर्मखोमहान्नानायुधैर्वामनकैरुदायुधैः पिंगैःपिशंगैर्मकरोदराननैःपर्याद्रवद्भिर्विदुरान्वरुध्यत १३

विक्षिप्तोभागणोनक्षत्रसंघोयेन पुनश्चतंकोपयतोविधातुरपिकिंस्वस्ति स्यान्नस्यादेवकाऽन्यस्यकथा ११ उद्विग्नाप्रचलितादृक्यस्यतेनजनेनबहुयथाभवत्येवमुच्यमानेसति उत्पाततमाः महोत्पाताउत्थिताः पर्यक्सर्वतश्च कथंभूताः महात्मनोऽपिदक्षस्यभयावहाः १२ नानाआयुधानियेषाम् वामनकैः ह्रस्वैः उद्यतायुधैः पिंगैः कपिलैः पिशंगैः पीतैः मकरस्येवोदरमाननंचयेषांतैः परितोधावद्भिः अवरुद्धः १३ ५ ५ ५ ५ ५ ५ ५

यज्ञशालायाः पूर्वपश्चिमस्तंभयोः अर्पितं पूर्वपश्चिमायतं काष्ठं प्राग्वंशः तम् यज्ञशालायाः पश्चिमतः पत्नीशालां ताम् यज्ञशालायाः पुरतः स्थितं सदो मंडपम् सदसः पुरो हविर्धानम् तस्योत्तरत आग्नीध्रशालाम् तद्विहारं यजमानगृहम् महानसं पाकभोजनशालाम् १४ रुरुजुः बभंजुः उत्तरवेद्याः मेखलाः सीमासूत्राणि आज्ञा गुरूणां ह्यविचारणीया इति हेतोर्न ते दोषभाजिन इति भावः १५ प्रत्यासन्नान पलायिनान् समीपस्थान् पलायितानपि जगृहुः १६ १७ ग्रावभिरर्द्यमानाः नैकधा अनेकधा दुद्रुवुः १८ स्रुवो हस्ते यस्य भवो वीरभद्रः लुलुंचे उत्पाटितवान् १९ उज्जहार उद्धृतवान् सदस्थः सभायां स्थितः सन् शपंतं शिवनिंदां कुर्वंतं दक्षमक्ष्णा

केचिद्बभंजुः प्राग्वंशं पत्नीशालां तथापरे सद आग्नीध्रशालां च तद्विहारं महानसम् १४ रुरुजुर्यज्ञपात्राणि तथैके ऽग्नीननाशयन् कुंडेष्वमूत्रयन् केचिद्बिभिदुर्वेदिमेखलाः १५ अबाधंत मुनीनन्य एके पत्नीरतर्जयन् अपरे जगृहुर्देवान् प्रत्यासन्नान्पलायितान् १६ भृगुं बबंध मणिमान्वीरभद्रः प्रजापतिम् चंडीशः पूषणं देवं भगं नंदीश्वरो ऽग्रहीत् १७ सर्व एवर्त्विजो दृष्ट्वा सदस्याः सदिवौकसः तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाद्रवन् १८ जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान्भवः भृगोर्लुलुंचे सदसि यो ऽहसत् श्मश्रु दर्शयन् १९ भगस्य नेत्रे भगवान्पातितस्य रुषोर्व्यां उज्जहार सदस्थो ऽक्ष्णा यः शपंतमसूसुचत् २० पूष्णश्चापातयद्दंतान् कालिंगस्य यथा बलः शप्यमाने गरिमणि यो ऽहसद्दर्शयन्दतः २१

अक्षिसंकोचेन असूसुचत् २० कलिंगदेशराजस्यानिरुद्धो द्यूते बलभद्रो यथा द्यूते दंतान् पातितवान् गरिमणि गुरुतरे रुद्रे निंद्यमाने दतः दंतान् दर्शयन् यो जहास पूष्णोरिति पाठे द्विवचनमैंद्रापौष्णश्चरुर्भवतीत्यत्रान्यसहितस्यापि पूष्णो दंतपातप्राप्त्यर्थं सूचितवान् तथाहि पूषा प्रपिष्टभागो ऽदंतको हि तं देवा अब्रुवन्निति विहितस्य पेषणस्य द्विदेवत्याभावात् तत्र तस्य दंताः संतीति वक्तव्यं स्यात् न चैतत्संगच्छत इत्याशंक्य तत्रापि तस्य दंतपातो ऽवस्थाभेदप्रवृत्तेन द्विवचनेन प्राप्यते अत एव पूष्णो ऽनुग्रहं द्वैधा वक्ष्यति पूषा तु यजमानस्य दद्भिर्जक्षतु पिष्टभुक् इति केवलस्यैव प्रपिष्टभुक् भविष्यति अन्यसहितस्यैव यजमानस्य दद्भिर्भक्षयिष्यतीत्यर्थः २१

छिंदन्नपीत्यत्रशिरइत्यकपरिव्यक्तीभविष्यति त्र्यंबकोवीरभद्रः २२ अस्त्रान्वितैर्मंत्रसहितैः ननिर्भिन्नात्वक्‌यस्यनथाभूतंदृष्ट्वेतिशे-
षः २३ सपशूनांपतिः मखेसंज्ञपनंयोगंकंठनिष्पीडनादिरूपंमारणोपायंदृष्ट्वातेनोपायेनाहरत् २४ अन्येषांब्राह्मणादीनांतद्विपर्य
यः असाधुवादः अभूदितिशेषः २५ गुह्यकालयंकैलासम् २६ इतिचतुर्थेटीकायांपंचमोऽध्यायः ५ षष्ठेतुदेवसंघेनसह
गत्वाभवंविधिः सांत्वयामासदक्षादिजीवितार्थमादरात् १ अथदेवगणाःस्वयंभुवेन्यवेदयन् इतिद्वितीयेनान्वयः १ शूलादि

आक्रम्योरसिदक्षस्यशितधारेणहेतिना छिंदन्नपिनदुर्द्धर्तुंनाशक्नोत्त्र्यंबकस्तदा २२ शस्त्रैरस्त्रान्वि
तैरेवमनिर्भिन्नत्वचंहरः विस्मयंपरमापन्नोदध्यौपशुपतिश्चिरम् २३ दृष्ट्वासंज्ञपनंयोगंपशूनांस
पतिर्मखे यजमानपशोःकस्यकायात्तेनाहरच्छिरः २४ साधुवादस्तदातेषांकर्मतत्तस्यशंसताम्
भूतप्रेतपिशाचानामन्येषांतद्विपर्ययः २५ जुहावैतच्छिरस्तस्मिन्दक्षिणाग्नावमर्षितः तद्देवय-
जनंदग्ध्वाप्रातिष्ठद्गुह्यकालयम् २६ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेदक्षयज्ञवि
ध्वंसोनामपंचमोऽध्यायः ५ मैत्रेयउवाच अथदेवगणाःसर्वेरुद्रानीकैःपराजिताः
शूलपट्टिशनिस्त्रिंशगदापरिघमुद्गरैः १ उच्छिन्नभिन्नसर्वांगाःसर्त्विक्सभ्याभयाकुलाः स्वयंभु
वेनमस्कृत्यकार्त्स्न्येनैतन्न्यवेदयन् २ उपलभ्यपुरैवैतद्भगवानब्जसंभवः नारायणश्चविश्वात्मानक
स्याध्वरमीयतुः ३ तदाकर्ण्यविभुःप्राहतेजीयसिकृतागसि क्षेमायतत्रसाभूयान्नप्रायेणबुभू
षताम् ४ अथापियूयंकृतकिल्बिषाभवंयेबर्हिषोभागभाजंपरादुः प्रसादयध्वंपरिशुद्धचेतसाक्षि
प्रप्रसादंप्रगृहीतांघ्रिपद्मम् ५ भिः संछिन्नानित्रुटितानिभिन्नानिविदीर्णान्यंगानियेषामसहऋत्विग्भिःसभ्यैश्चवर्त

मानाः २ कस्यदक्षस्ययज्ञेब्रह्माविष्णुश्चनेयतुः नजग्मतुः यत्रारुद्रकोयज्ञस्तत्रनारायणविरिंच्यावपिनागतौ ३ विभुर्ब्रह्मा ते-
जीयसि अतितेजस्विनिपुरुषेकृतागसिसत्यपिस्वयंतत्रकृतागसांबुभूषतामपराधंकर्तुमिच्छतांसातथाबभूषातेषांक्षेमायनभूयात्
प्रायेणेतिलोकोक्तिः नभवेदेवेत्यर्थः ४ अथापिप्रसादयध्वंक्षमापयत येभवंतः बर्हिषोयज्ञस्यभागभाजंपरादुः दूरेखंडितवंतः प्र
गृहीतांघ्रिपद्मंपादौप्रगृह्येत्यर्थः ५

छ॰ छ॰ छ॰ छ॰ छ॰

अध्वरस्यजीवितंपुनःसंधानंप्रार्थयमानाःसंतः यस्मिन् कुपितेसतिसपालोलोकः नभवेन्नश्येदित्यर्थः ६ वयंतुतत्रगंतुंबिभीमः त्वमे
वकिंचिदुपायंविधत्स्वेतिचेत् अतआह नेति यज्ञस्तदानींतनइंद्रः यस्यतत्त्वंबलवीर्ययोः प्रमाणमियत्तांचनविदुःवीर्यंपराक्रमः पा-
पमितिपाठेऽपराधम् ७ ८ कैलासंवर्णयति जन्मौषधीत्यादिचतुर्दशभिः नरेतरैर्देवैर्जुष्टम् ९ शृंगैरमणंरतिप्रदमित्युत्तरेणान्व-
यः कथंभूतैर्नानाधातुभिर्विचित्रितैः नानाद्रुमलतागुल्माआश्रयेषु १० नानाअमलानिप्रस्रवणानियेषु नानाकंदराःसानवश्चयेषु र

आशासानाजीवितमध्वरस्यलोकःसपालःकुपितेनयस्मिन् तमाशुदेवंप्रिययाविहीनंक्षमापय
ध्वंहृदिविद्धंदुरुक्तैः ६ नाहंनयज्ञोनचयूयमन्येयेदेहभाजोमुनयश्चतत्त्वम् विदुःप्रमाणंबलवीर्य
योर्वायस्यात्मतंत्रस्यकउपायंविधित्सेत् ७ सइत्थमादिश्यसुरानजस्तैःसमन्वितःपितृभिःसप्रजे
शैः ययौस्वधिष्ण्यान्निलयंपुरद्विषःकैलासमद्रिप्रवरंप्रियंप्रभोः ८ जन्मौषधितपोमंत्रयोगसिद्धै
र्नरेतरैः जुष्टंकिन्नरगंधर्वैरप्सरोभिर्वृतंसदा ९ नानामणिमयैःशृंगैर्नानाधातुविचित्रितैः नाना
द्रुमलतागुल्मैर्नानामृगगणावृतैः १० नानाऽमलप्रस्रवणैर्नानाकंदरसानुभिः रमणंविहरंती
नांरमणैःसिद्धयोषिताम् ११ मयूरकेकाभिरुतंमदांधालिविमूर्छितम् प्लावि[illegible]रक्तकंठानांकूजितै
श्चपतत्रिणाम् १२ आह्वयंतमिवोद्धस्तैर्द्विजान्कामदुघैर्द्रुमैः व्रजंतमिवमातंगैर्गृणंतमिवनिर्झ-
रैः १३

मणैःसहक्रीडंतीनाम् ११ मयूराणांकेकाभिः स्वनैर्नादितम् मदांधैरलिभिर्विमूर्छितम् मूर्छनारागगतिविशेषःतद्यु
क्तम् रक्तकंठानांकोकिलानांप्लाविनैः प्लुतलंबितैः स्वरैः अन्येषांचपतत्रिणांकूजितैःउद्धस्तैः उन्नतशाखैर्द्रुमैर्द्विजान् पक्षिणआह्व-
यंतमिव लोकेहिहस्तमुत्क्षिप्योच्चैःस्वरेणाह्वानमर्थिनांकुर्वंति अद्रिश्चोत्क्षिप्तहस्ताकारैर्द्रुमैस्तत्रत्यपक्षिस्वनैश्चतथालक्ष्यतइत्यर्थः
व्रजद्भिर्मातंगैर्व्रजंतमिवनिर्झरध्वनिभिर्गृणंतंभाषमाणमिव १३ ५९ ५९ ५९

१४ चूतामयोरवांतरजातिभेदः वेणुकीचकयोश्चनीरंध्रसरंध्रत्वेनभेदः १५ वेणुकजातिभिरित्यत्रवेणुकाएलाजातिर्मालती १६ १७ द्रुमजातिभिरित्यत्रजातिरवांतरभेदसामान्यम् १८ कुमुदादिसमृद्धिभिर्नलिनीषुसरः स्वकलंमधुरंयथाभवति एवंकूजंतियानिपक्षिवृंदानितैरुपशोभितम् १९ मृगादिभिर्निर्जुष्टंनिषेवितम् नाभिभिः कस्तूरीमृगैः पूर्वंमृगगणाः शृंगविशेषेणत्वेनोक्ताः इदानींस्वातंत्र्येणेत्यपौनरुक्त्यम् कदलीखंडैः संरुद्धानिआवृतानिनलिनीनांपुलिनानितैः श्रीःशोभायस्मिन् २० नंदयागंगयापर्यस्तं

मंदारैःपारिजातैश्चसरलैश्चोपशोभितम् तमालैःशालतालैश्चकोविदारासनार्जुनैः १४ चूतैःकदंबैर्नीपैश्चनागपुन्नागचंपकैः पाटलाशोकबकुलैःकुंदैःकुरबकैरपि १५ स्वर्णार्णशतपत्रैश्चवरवेणुकजातिभिः कुब्जकैर्मल्लिकाभिश्चमाधवीभिश्चमंडितम् पनसोदुंबराश्वत्थप्लक्षन्यग्रोधहिंगुभिः १६ भूर्जैरोषधिभिःपूगैराजपूगैश्चजंबुभिः खर्जूराम्रातकाम्राद्यैःप्रियालमधुकेंगुदैः १७ द्रुमजातिभिरन्यैश्चराजितंवेणुकीचकैः कुमुदोत्पलकल्हारशतपत्रवनर्द्धिभिः १८ नलिनीषुकलंकूजत्खगवृंदोपशोभितम् १९ मृगैःशाखामृगैःक्रोडैर्मृगेंद्रैर्ऋक्षशल्यकैः गवयैर्नाभिभिर्व्याघ्रैर्निर्जुष्टंमहिषादिभिः २० कदलीखंडसंरुद्धनलिनीपुलिनश्रियम् पर्यस्तंनंदयासत्याःस्नानपुण्यतरोदया विलोक्यभूतेशगिरिंविबुधाविस्मयंययुः २१ ददृशुस्तत्रतेरम्यामलकांनामवैपुरीम् वनंसौगंधिकंचापियत्रतन्नामपंकजम् २२ नंदाचालकनंदाचसरितौबाह्यतःपुरम् तीर्थपादपदांभोजरजसाऽतीवपावने २३ ययोःसुरस्त्रियःक्षत्तरवरुह्यस्वधिष्ण्यतः क्रीडंतिपुंसःसिंचंत्योविगाह्यरतिकर्शिताः २४

परिवेष्टितम् सत्याः भवान्याः स्नानेनपुण्यंपुण्यतरमतिसुगंधमुदकंयस्याम् २१ तत्रगिरौवनंचददृशुः यत्रवनेतन्नामसौगंधिकंपंकजंभवति जातावेकवचनम् २२ पुरींवर्णयतिनंदाचेतिचतुर्भिः सरितौ पुराद्बाह्यतोभवतः तीर्थपादस्यहरेः पादांभोजरजसा २३ ययोर्विगाह्यप्रविश्यक्रीडंति २४ ५ ५ ५ ५ ५

ययोरंभोविगततृषोऽपिगजाः पिबंति नत्रहेतुः तासांस्मरस्त्रीणांस्नानेनभ्रष्टंगलितंयन्नवकुंकुमंतेनपिंजरंपीतवर्णम् गजीःकरि-
णीः २५ तारंरूप्यम् तारादिमयविमानानांशतैःसंकुलाम् तडिद्भिःस्त्रीणाम् घनैर्विमानानाम् खेनपुर्य्याःसादृश्यम् २६ यक्षेश्वर
पुरींहित्वाऽतिक्रम्यनद्यं चदृष्ट्वातेदेवाः आरात् दूरात् वटंददृशुरितिचतुर्थेनान्वयः कथंभूतंवनम् चित्राणिमाल्यानिफलानिछं
दाश्चपत्राणियेषुतैर्द्रुमैःहृद्यंस्मरवकरम् २७ रक्तकंठखगानामनीकस्यस्वरैर्मंडिताःषट्पदस्वरायस्मिन् कलहंसानांकुलस्यप्रेष्ठम्
खरदंडानिपद्मानितैर्युक्ताजलाशयायस्मिन् २८ वनकुंजरैःसंघृष्टायेहरिचंदनद्रुमाः तत्संबंधिनावायुनापुण्यजनस्त्रीणांमनः

ययोस्तत्स्नानविभ्रष्टनवकुंकुमपिंजरम् वितृषोऽपिपिबंत्यंभःपाययंतोगजागजीः २५ तारहेम
महारत्नविमानशतसंकुलाम् जुष्टांपुण्यजनस्त्रीभिर्यथाखंसतडिद्घनम् २६ हित्वायक्षेश्वरपुरींव
नंसौगंधिकंचतत् द्रुमैःकामदुघैर्हृद्यंचित्रमाल्यफलच्छदैः २७ रक्तकंठखगानीकस्वरमंडितषट्
पदम् कलहंसकुलप्रेष्ठंखरदंडजलाशयम् २८ वनकुंजरसंघृष्टहरिचंदनवायुना अधिपुण्यजन
स्त्रीणांमुहुरुन्मथयन्मनः २९ वैडूर्यकृतसोपानावाप्यउत्पलमालिनीः प्राप्तंकिंपुरुषैर्दृष्ट्वातआरा
द्ददृशुर्वटम् ३० सयोजनशतोत्सेधःपादोनविटपायतः पर्यक्कृताचलच्छायोनिर्नीडस्तापवर्जि
तः ३१ तस्मिन्महायोगमयेमुमुक्षुशरणंसुराः ददृशुःशिवमासीनंत्यक्तामर्षमिवांतकम् ३२
सनंदनाद्यैर्महासिद्धैःशांतैःसंशांतविग्रहम् उपास्यमानंसख्याचभर्त्रागुह्यकरक्षसाम् ३३ वि-
द्यातपोयोगपथमास्थितंतमधीश्वरम् चरंतंविश्वसुहृदंवात्सल्याल्लोकमंगलम् ३४

अधि अधिकमुन्म
थयत् २९ यत्रचोत्पलमालिन्योवाप्यस्तत्रकिंपुरुषैःप्राप्तंवनंदृष्ट्वापाठांतरेकिंपुरुषैःप्राप्तावापीश्चदृष्ट्वाइत्यर्थः ३० योजनशतमु
त्सेधउच्छ्रायोयस्य पादोनैःसर्वतः पंचसप्ततियोजनप्रमाणैर्विटपैः शाखाभिरायतोविस्तृतः पर्यक्कृसर्वतः कृताअचलाछायाये-
ननिर्गतंनीडंयस्मात् ३१ मुमुक्षूणांशरणमाश्रयम् त्यक्तामर्षोंऽतकस्तत्तुल्यम् ३२ तंविशिनष्टिसनंदनाद्यैरितिपंचभिःसख्या
कुबेरेणोपास्यमानम् ३३ विद्याउपासनातपश्चित्तैकाग्र्यंयोगःसमाधिस्तेषांपंथानंप्रवर्त्तनद्वारंलोकस्यमंगलंहितंततोवात्सल्यात्स्नेहाच्चरंतम् ३४

संध्याऽभ्ररुचारक्तवर्णेनांगेनभस्मादिलिंगंचंद्रलेखांचबिभ्रतम् ३५ व्रतिनामासनंबृषीतस्याम् ब्रह्मप्रवोचंतम् ३६ सव्यंपादपद्मंद
क्षिणेऊरौकृत्वाविन्यस्यजानुनिचसव्येबाहुंकृत्वाप्रकोष्ठेमणिबंधस्थानेअक्षमालांचकृत्वादक्षिणहस्तकृतयातर्कमुद्रयाउपलक्षित-
मासीनमित्यर्थः तदुक्तंयोगशास्त्रे एकपादमथैकस्मिन्विन्यसेदूरसंस्थितम् इतरस्मिंस्तथाबाहुंवीरासनमिदंस्मृतम् तर्कमुद्राचो
क्ता तर्जन्यंगुष्ठयोरग्रेमिथःसंयोज्यचांगुलीः प्रसार्यबंधनंप्राहुस्तर्कमुद्रेतिमांत्रिकाइति ३७ ब्रह्मनिर्वाणंब्रह्मानंदः तत्रसमाधि
रैकाग्र्यंतमाश्रितम् योगकक्षांयोगपट्टंचवामजानुदृढीकरणार्थविशेषेणोपाश्रितवंतम् मननशीलामनवस्तेषामाद्यंमुख्यम् ३८

लिंगंचतापसाभीष्टंभस्मदंडजटाजिनम् अंगेनसंध्याऽभ्ररुचाचंद्रलेखांचबिभ्रतम् ३५ उपविष्टं
दर्भमय्यांबृष्यांब्रह्मसनातनम् नारदायप्रवोचंतंपृच्छतेशृण्वतांसताम् ३६ कृत्वोरौदक्षिणेसव्यंपा
दपद्मंचजानुनि बाहुंप्रकोष्ठेऽक्षमालामासीनंतर्कमुद्रया ३७ तंब्रह्मनिर्वाणसमाधिमाश्रितंव्युपा
श्रितंगिरिशंयोगकक्षाम् सलोकपालामुनयोमनूनामाद्यंमनुंप्रांजलयःप्रणेमुः ३८ सतूपलभ्याग-
तमात्मयोनिंसुरासुरेशैरभिवंदितांघ्रिः उत्थायचक्रेशिरसाभिवंदनमर्हत्तमःकस्ययथैवविष्णुः ३९
तथाऽपरेसिद्धगणामहर्षिभिर्येवैसमंतादनुनीललोहितम् नमस्कृतःप्राहशशांकशेखरंकृतप्रणा
मंप्रहसन्निवात्मभूः ४० ब्रह्मोवाच जानेत्वामीशंविश्वस्यजगतोयोनिबीजयोः शक्तेःशिव
स्यचपरंयत्तद्ब्रह्मनिरंतरम् ४१ त्वमेवभगवन्नेतच्छिवशक्त्योःसरूपयोः विश्वंसृजसिपास्यत्सिक्री
डन्नूर्णपटोयथा ४२

आर्हत्तमोविष्णुर्वामनमूर्तिर्यथाकस्यकश्यपस्य ३९ महर्षिभिःसहिताःयेनीललोहितमनुवर्तंतेतेऽ
पितस्मैवंदनंचक्रुः एवंसर्वैर्नमस्कृतःप्राह कृतःप्रणामोदेवैर्यस्मैतम् ४० यद्यपित्वंनीचवन्मांनमस्करोषि तथाऽपित्वैश्वर्यमहंवेद्मीत्या
ह जानइति विश्वस्येशंजानेतत्रहेतुः जगतोयोनिर्याशक्तिः प्रकृतिर्बीजंच शिवःपुरुषस्तयोःकारणंतथाऽपिनिरंतरंनिर्भेदंयद्ब्रह्मनिर्वि
कारंतदेवत्वामितिजाने ४१ ननुविरुद्धमेतत्तत्राह त्वमेवसरूपयोरविभक्तयोःशिवशक्त्योःक्रीडन्विश्वसृष्ट्यादिकरोषि ऊर्णनाभिरिव स्व
रूपयोरितिपाठेस्वांशयोःअतोनविरोधः ४२

धर्ममर्थंचदोग्धियात्रयीतस्याअभिपत्तयेरक्षणायाध्वरंसृष्टवानसि यद्वा हेधर्मार्थदुघ धर्माद्यभिपत्तयेतत्प्राप्तयेदक्षेणसूत्रेणनिमित्ते
नसेतवोवर्णाश्रममर्यादाश्चअवसिताः निबद्धाः निर्णीताइतिवा श्रद्दधतेश्रद्धयाअनुतिष्ठंति ४३ सर्वकर्मफलदातापित्वमेवेत्याह हेमं-
गल मंगलानांशुभानांकर्मणांकर्त्तुः स्वः स्वर्गपरंमोक्षंवातनुषे अमंगलानामशुभानांकर्मणांकर्त्तुश्चतमिस्रंनरकंतनुषे तत्रकेनहेतुना
तदेवतस्मिन्नेवकस्यचिद्विपर्ययोभवति ४४ त्वत्कोपो ऽत्रहेतुरित्यसंभावितमितिकैमुत्यन्यायेनाह नवैसतांसतः रोषोभिभवेत्
नवत्त्वांद्वितीयार्थेषष्ठ्यौ पशुमज्ञंयथा ऽभिभवति तद्वत् ४५ अतः येपृथक्धियः भेददृशः अतः कर्मण्येव दृष्टिर्येषाम् दुष्टआश

त्वमेवधर्मार्थदुघाभिपत्तयेदक्षेणसूत्रेणससर्जिथाध्वरम् त्वयैवलोके ऽवसिताश्चसेतवोयान्ब्राह्मणाः
श्रद्दधतेधृतव्रताः ४३ त्वंकर्मणांमंगलमंगलानां कर्त्तुःस्वलोकेतनुषेस्वःपरंवा अमंगलानांचतमिस्रमुल्बणंविपर्ययःकेनतदेवकस्यचित् ४४ नवैसतांत्वच्चरणार्पितात्मनां भूतेषुसर्वेष्वभिप-
श्यतांतव भूतानिचात्मन्यपृथक्दिदृक्षतांप्रायेणरोषो ऽभिभवेद्यथापशुम् ४५ पृथक्धियःक
र्मदृशोदुराशयाः परोदयेनार्पितहृद्रुजो ऽनिशम् परान्दुरुक्तैर्वितुदंत्यरुंतुदास्तान्मा ऽवधीद्दैववधान्भवद्विधः ४६ यस्मिन्यदापुष्करनाभमाययादुरंतयास्पृष्टधियः पृथग्दृशः कुर्वंतितत्र ह्य-
नुकंपयाकृपांनसाधवोदैवबलात्कृतंक्रमम् ४७ भवांस्तुपुंसःपरमस्यमाययादुरंतयास्पृष्टमतिः
समस्तदृक् तयाहतात्मस्वनुकर्मचेतःस्वनुग्रहंकर्त्तुमिहार्हसिप्रभो ४८

यो येषाम् परेषामुदयेनसंपदाअर्पितान्हृदिरुग्येषामरुंतुदामर्मभेत्तारः दैवेनैववधोयेषांतान् भवद्विधः निरुपमः साधुः मा ऽवधी
न्नहन्यात् ४६ प्रत्युतसाधूनांवृत्तमालोक्यानुग्रहमेवकर्त्तुमर्हसीत्याहद्वाभ्याम् यस्मिन्देशेयदाकालेस्पृष्टधियोमोहितचित्ताः पृथ
क्दृशोभवंति तत्रापराधेसाधवोहि अनुकंपयाअनंतरमेवपरदुःखासहिष्णुतयाचित्तप्रकंपेनकृपांकुर्वंति नतुक्रमंपराक्रमम् कु
तः दैवबलात्कृतेऽर्थेममैवदैवमेवंभूतम् कोऽत्रापराधस्तेषामितिमत्वा हननंनकुर्वतइत्यर्थः ४७ भवांस्तु अस्पृष्टमतिः अतः समस्त-
दृक् सर्वज्ञः तयामाययाहतआत्मायेषांतेषु अतएवकर्मानुगतचित्तेषु इहअपराधेअनुग्रहंकर्त्तुमर्हसि ४८ ६९ ६९

एवंसामान्येनोक्त्वाप्रस्तुतमाह कुर्विति त्रिभिः त्वयाहतस्य अतएवासमाप्तस्य प्रजापतेरध्वरस्य हेमनोयत्रोध्वरे कुयाज्ञिकाः भागिनो पिनवभागंनददुः भागार्हत्वमाह येनत्वयामखोनिनीयतेफलंप्राप्यते ४९ ५० हेमन्योअनातुरमारोग्यमस्तु ५१ भागश्चतवास्त्वित्याह एषइति हेरुद्रयावदित्यर्थेयदित्यव्ययम् यज्ञेकृतेयावानुच्छिष्टः अवशिष्टोऽर्थः तावानेवतवभागोऽस्तु हेरुद्र तेनभागेनाद्ययज्ञः कल्पतांसंपद्यताम् ५२ इतिचतुर्थेटीकायांषष्ठोऽध्यायः ६ सप्तमेविष्णुरुद्रूतः स्तुतोदक्षमुखादिभिः



कुर्वध्वरस्योद्धरणंहतस्यभोत्वयाऽसमाप्तस्यमनोप्रजापतेः नयत्रभागंतवभागिनोददुःकुयज्विनोयेनमखोनिनीयते ४९ जीवताद्यजमानोयंप्रपद्येताक्षिणीभगः भृगोःश्मश्रूणिरोहंतुपूष्णोदंताश्चपूर्ववत् ५० देवानांभग्नगात्राणामृत्विजांचायुधाश्मभिः भवताऽनुगृहीतानामाशुमन्योऽस्त्वनातुरम् ५१ एषतेरुद्रभागोऽस्तुयदुच्छिष्टोऽध्वरस्यवै यज्ञस्तेरुद्रभागेनकल्पतामद्ययज्ञहन् ५२ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेरुद्रसांत्वनंनामषष्ठोऽध्यायः ६ मैत्रेयउवाच इत्यजेनानुनीतेनभवेनपरितुष्यता अभ्यधायिमहाबाहोप्रहस्यश्रूयतामिति १ श्रीमहादेवउवाच नाघंप्रजेशबालानांवर्णयेनानुचिंतये देवमायाऽभिभूतानांदंडस्तत्रधृतोमया २ प्रजापतेर्दग्धशीर्ष्णोभवत्वजमुखंशिरः मित्रस्यचक्षुषेक्षेतभागंस्वंबर्हिषोभगः ३ पूषातुयजमानस्यदद्भिर्जक्षतुपिष्टभुक् देवाःप्रकृतसर्वांगायेमउच्छेषणंददुः ४ बाहुभ्यामश्विनोःपूष्णोहस्ताभ्यांकृतबाहवः भवंत्वध्वर्यवश्चान्येबस्तश्मश्रुर्भृगुर्भवेत् ५

यज्ञंप्रवर्त्तयामासदक्षेणेतिनिरूप्यते १ अजेनयोनुनीतःप्रार्थितोभवस्तेनाभिहितम् १ अघमपराधम् २ स्वापराधमपहृत्यानुगृह्णाति दग्धंशीर्षयस्यप्रजापतेः अजस्यमुखंयस्मिन् तत्तथाभूतंशिरोऽस्तु बर्हिषः संबंधिनंभागम् मित्रनाम्नोदेवस्य ३ प्रकर्षेणकृतानिलग्नान्यंगानियेषांतेभवंतुउच्छेषणंयज्ञावशिष्टम् ४ येषांत्वंगानिनष्टानितेतुअश्विनोर्बाहुभ्यांकृतबाहवः पूष्णोहस्ताभ्यांकृतहस्ताश्चभवंतु अध्वर्यवः अन्येचऋत्विजः बस्तस्यश्मश्रूण्येवश्मश्रूणियस्य ५ ७ ७ ७ ७ ७

मीढुष्टमः शिवः तेनोक्तम् परितुष्टैश्चित्तैः ६ मीढ्वांसंशिवम् त्वयागत्यसर्वंकार्यमित्यामंत्र्यसंप्रार्थ्य शुनासीरादेवाः सहमीढुषा वेधसाचवर्त्तमानाः समीढुद्वेधसः ७ कार्त्स्न्येनवक्त्रहस्तबाह्वादिसाधारण्यंविधाय ८ ९ पूर्वंवृषध्वजद्वेषेणकलिलः कलुषीकृतआत्मायस्यसः तदाशरत्कालीनोह्रदइवामलोभवत् १० ११ १२ यदपियद्यपिप्रलब्धः पराभूतोमयाभवान् तथाऽपित्वयादंडोधृतः शिक्षाकृतानानूपेक्षितोऽस्मियुक्तमेवैतदित्याह ब्रह्मबंधुषुब्राह्मणाभासेष्वपितुभ्यंनवहरेश्चेतिवांयुवयोरवज्ञाउपेक्षानास्ति

मैत्रेयउवाच तदासर्वाणिभूतानिश्रुत्वामीढुष्टमोदितम् परितुष्टात्मभिस्तातसाधुसाध्वित्यथाब्रुवन् ६ ततोमीढ्वांसमामंत्र्यशुनासीराः सहर्षिभिः भूयस्तद्देवयजनंसमीढुद्वेधसोययुः ७ विधायकार्त्स्न्येनचतत् यदाहभगवान्भवः संदधुः कस्यकायेनसवनीयपशोःशिरः ८ संधीयमाने शिरसिदक्षोरुद्राभिवीक्षितः सद्यः सुप्तइवोत्तस्थौददृशेचाग्रतोमृडम् ९ तदावृषध्वजद्वेषकलिलात्माप्रजापतिः शिवावलोकादभवत् शरद्ध्रदइवामलः १० भवस्तवायकृतधीर्नाशक्नोदनुरागतः औत्कंठ्याद्बाष्पकलयासंपरेतांसुतांस्मरन् ११ कृच्छ्रात्संस्तभ्यचमनः प्रेमविह्वलितः सुधीः शशंसनिर्व्यलीकेनभावेनेशंप्रजापतिः १२ दक्षउवाच भूयाननुग्रहअहोभवताकृतोमे दंडस्त्वयामयिभृतोयदपिप्रलब्धः नब्रह्मबंधुषुचवांभगवन्नवज्ञातुभ्यंहरेश्चकुतएवधृतव्रतेषु १३ विद्यातपोव्रतधरान्मुखतः स्मविप्रान् ब्रह्मात्मतत्त्वमवितुंप्रथमंत्वमस्राक् तद्ब्राह्मणान्परमसर्वविपत्सुपासिपालः पशूनिवविभोप्रगृहीतदंडः १४ योऽसौमयाविदिततत्त्वदृशासभायांक्षिप्तोदुरुक्तिविशिखैर्विगणय्यतन्माम् अर्वाक्पतंतमर्हत्तमनिंदयापात् दृष्ट्यार्द्रयासभगवान्स्वकृतेनतुष्येत् १५

१३ तत्रहेतुमाह विद्येति ब्रह्माभूत्वात्वमस्राक् अस्राक्षीः किमर्थंआत्मतत्त्वमवितुम् यद्वा ब्रह्मवेदमात्मतत्त्वंच अवितुंसंप्रदायप्रवर्तनेनज्ञापयितुमित्यर्थः ततस्मात् हेपरमउत्कृष्ट १४ अत्रचप्रत्युपकारोनास्तीत्याह योऽसाविति अविदिततत्त्वदृशाअप्राप्ततत्त्वज्ञानेनतद्गणय्यविस्मृत्यअर्हत्तमनिंदयाअर्वागधः पतंतंमामपात् रक्षितवान् स्वकृतेनैवपरानुग्रहेणेवतुष्येत् मयातत् प्रतिकर्तुमशक्यमित्यर्थः १५

अनुमंत्रितोऽनुज्ञातः उपाध्यायसहितैः ऋत्विजादिभिः अनुवर्तयामास १६ वीराणां प्रमथादीनां संसर्गकृतदोषस्य शुद्ध्यर्थं निर्वृत्यर्थम् १७ उपात्तहविषा अध्वर्युणा सह विशुद्धया बुद्ध्या दध्यौ हे विशांपते विदुर १८ स्वया प्रभया तेषां तेजो मुष्णान् निरस्कुर्वन् उपानीतः समीपं प्रापितः स्तोत्रे बृहद्रथंतरे वाजौ पक्षौ यस्य इत्थं बृहद्रथंतरे पक्षौ विनिश्चितः १९ तमेवानुवर्णयति श्याम इति द्वाभ्याम् हिरण्यवद्रशना यस्य इति वस्त्रं लक्ष्यते अर्कतुल्येन किरीटेन जुष्टः नीलालका एव भ्रमरास्तैर्मंडितं कुंडलयुक्तम् आस्यं यस्य कंब्वादि

मैत्रेय उवाच क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमंत्रितः कर्म संतानयामास सोपाध्यायर्त्विग्भिः १६ वैष्णवं यज्ञसंतत्यै त्रिकपालं द्विजोत्तमाः पुरोडाशं निरवपन् वीरसंसर्गशुद्धये १७ अध्वर्युणात्तहविषा यजमानो विशांपते धिया विशुद्धया दध्यौ तथा प्रादुरभूद्धरिः १८ तदा स्वप्रभया तेषां द्योतयंत्या दिशो दश मुष्णांस्तेज उपानीतस्तार्क्ष्येण स्तोत्रवाजिना १९ श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमरमंडितकुंडलास्यः कंब्वब्जचक्रशरचापगदासिचर्मव्यग्रैर्हिरण्मयभुजैरिव कर्णिकारः २० वक्षस्यधिश्रितवधूर्वनमाल्युदारहासावलोककलया रमयंश्च विश्वम् पार्श्वभ्रमद्व्यजनचामरराजहंसः श्वेतातपत्रशशिनोपरि रज्यमानः २१ तमुपागतमालक्ष्य सर्वे सुरगणादयः प्रणेमुः सहसोत्थाय ब्रह्मेंद्रत्र्यक्षनायकाः २२ तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः मूर्ध्ना धृतांजलिपुटा उपतस्थुरधोक्षजम् २३

भिरायुधैः भृत्यरक्षार्थं व्यग्रैर्हिरण्मयैर्भुजैः पुष्पितः कर्णिकार इव वृक्षविशेषः शोभमानः भुजानां हिरण्मयत्वं केयूरकंकणमुद्रिकाद्यलंकारैः २० वक्षसि अधिश्रिता वधूर्लक्ष्मीर्यस्य सः उदारो हासो अवलोकश्च तयोः कलया लेशेन पार्श्वे उभयतो भ्रमती व्यजनचामरे चामरव्यजने एव राजहंसौ यस्मिन् सः रज्यमानः शोभातिशयं नीयमानः २१ ब्रह्मेंद्रत्र्यक्षा नायका मुख्या येषां ते २२ हतरुचः तिरस्कृतप्रभाः सन्नजिह्वा गद्गदवाचः ससाध्वसाः तन्महिम्नाक्षुभितचित्ताः उपतस्थुस्तुष्टुवुः २३

यस्यमहिमानंप्रतितु अर्वागेववृत्तिर्येषांतेऽपियथामतिगृणंतिस्म अस्तुवन् कृतःप्रकटीकृतोऽनुग्रहार्थंविग्रहोयेनतम् यद्वा तेषामर्वाग्वृत्तित्वेहेतुः तेतुयस्यमहिमहिमाविभूतिमात्ररूपाइत्यर्थः २४ तत्रतावत् दक्षस्तुतिप्रकारमाह दक्षइति गृहीतमर्हणसादनोत्तमंयेनतसुत्तमेपात्रेआसाद्य अर्हणीयेषुसमर्पितेषुप्रीत्यासार्हणपात्रंस्वयमेवयेनगृहीतमित्यर्थः यद्वा कथंप्रपेदे गृहीतमर्हणसादनोत्तमंयथाभवतितनद्गृहीत्वाप्रपेदइत्यर्थः गृहीत्वेतिपाठस्तुस्तुगमः गृणन् स्तुवन् प्रपेदेशरणंजगाम दक्षऋत्विक् सदस्येशभृगुब्रह्मेंद्रयोषितः ऋषयश्चतथासिद्धायजमानीचलोकपाः योगिब्रह्माग्निदेवाश्चस्तुवंतिजगदीश्वरम् तथागंधर्वविद्याधब्राह्मणाश्चपृथक्पृथक् २५ ननुसाक्षात्परमेश्वरएवरुद्रः तस्यब्रह्मपुत्रत्वेनजीवत्वमनुकारमात्रंहं

अप्यर्वाग्वृत्तयोयस्यमहित्वात्मभुवादयः यथामतिगृणंतिस्मकृतानुग्रहविग्रहम् २४ दक्षोगृहीतार्हणसादनोत्तमंयज्ञेश्वरंविश्वसृजांपरंगुरुम् सुनंदनंदाद्यनुगैर्वृतंमुदागृणन्प्रपेदेप्रयतः कृतांजलिः २५ दक्षउवाच शुद्धंस्वधाम्न्युपरताखिलबुद्ध्यवस्थंचिन्मात्रमेकमभयंप्रतिषिध्यमायाम् तिष्ठंस्तयैवपुरुषत्वमुपेत्यतस्यामास्तेभवानपरिशुद्धइवात्मतंत्रः २६

तत्किमितित्वयाभेददृष्ट्याऽसौअवज्ञातइतिमांभगवान् आक्षेप्स्यतीत्याशंक्यापरिच्छिन्नस्वरूपस्यजीवधर्मनाट्यंतवैवसंगच्छतेनान्यस्येत्याह शुद्धमिति स्वधाम्निस्वस्वरूपेतिष्ठन् भवान् शुद्धंचिन्मात्रंचैतन्यघनः शुद्धत्वेहेतुः उपरतानित्यनिवृत्ताअखिलाबुद्ध्यवस्थायस्मात् अतः एकंभेदशून्यम् अतएवअभयं द्वितीयाद्वैभयंभवतीतिश्रुतेः जीवस्यापितर्हिस्तुतएवंभूतत्वात्तद्वैलक्षण्यार्थमुक्तम् मायांप्रतिषिध्य अभिभूय स्वतंत्रएवसन् तयामाययापुरुषत्वमनुष्यनाट्यमुपेत्यतस्यांमायायांतिष्ठन् अपरिशुद्धइवरागादिमानिवास्ते रामकृष्णाद्यवतारेतथाप्रतीयतेभवानित्यर्थः अन्येत्वविद्योपाधयोमायाऽभिभूताः संसरंति अतस्त्वमेवेश्वरोनरुद्रादयइति भावः अतएवेमांहृदिभगवानवारयिष्यति अहंब्रह्माचशर्वश्चजगतः कारणंपरमित्यादिना २६ ६२

ऋत्विजोऽपिस्वस्यापराधंपरिहरंतःस्तुवंति भोअनंजनउपाधिमलशून्ययद्यपित्वमेवरुद्रादिदेवतारूपः तथाऽपिनंदीश्वरशापात् कर्मण्येवदुराग्रहधियःसंतस्त्वत्तस्त्वंनविद्मः किंतुधर्मस्यापूर्वस्योपलक्षणभूतंत्रिवृत् त्रयीप्रतिपाद्यमध्वराख्यंतवरूपमस्माभिर्ज्ञातम् कीदृशम् यस्यसिद्धयेऽधिदेवम् देवताऽधिकारेणादोव्यवस्थाः अमूर्व्यवस्थाः अत्रत्वमेवदेवतानान्येतैवंभूतानियमाइत्यर्थः यद्वा व्यवस्थाइत्याख्यातम् अडागमाद्यभावआर्षः यदर्थमदइदमिंद्राद्यधिदैवंरूपंविशेषेणास्थितवानसीत्यर्थः २७ सदस्यास्तुनिरीश्वरेऽपिदक्षाध्वरेधनलोभेनस्वप्रवृत्तिमनुचिंत्यानुतप्ताविरक्तिमाशासानास्तुवंति हेशरणद आश्रयप्रद उत्तत्त्यध्वनिसंसारमार्गेवर्तमानोअज्ञानांसार्थः समूहस्तेपादोकस्त्वत्पादरूपंनिवासंकदायास्यतिअश

ऋत्विजऊचुः तत्त्वंननेवयमनंजनरुद्रशापात्कर्मण्यवग्रहधियोभगवन्विदामः धर्मोपलक्षणमिदंत्रिवृदध्वराख्यंज्ञातंयदर्थमधिदैवमदोव्यवस्थाः २७ सदस्याऊचुः उत्पत्त्यध्वन्यशरणाउरुक्लेशदुर्गेंऽतकोग्रव्यालान्विष्टेविषयमृगतृष्णात्मगेहोरुभारः द्वंद्वश्वभ्रेखलमृगभयेशोकदावेऽज्ञसार्थःपादौकस्तेशरणदकदायातिकामोपसृष्टः २८ रुद्रउवाच तववरदवरांघ्रावाशिषेहाखिलार्थेह्यपिमुनिभिरसक्तैरादरेणार्हणीये यदिरचितधियंमाविद्यलोकोपविद्धंजपतिनगणयेतत्त्वत्पराऽनुग्रहेण २९

रणेविश्रामस्थानशून्ये उरुक्लेशाएवदुर्गमस्थानानियस्मिन् अंतकएवोग्रोव्यालस्तेनान्विष्टेलक्षीकृतेविषयरूपामृगतृष्णायस्मिन् आत्माऽहंकारास्पदंशरीरंममत्वास्पदंगेहंचसएवउरुर्भारोयस्यसः द्वंद्वानिसुखदुःखादीन्येवश्वभ्राणिगर्तायस्मिन् खलाएवमृगाव्याघ्रादयस्तेभ्योभयंयस्मिन् शोकएवदावाग्निर्यस्मिन् कामेनउपसृष्टः पीडितः २८ श्रीरुद्रस्तुपूर्वंममगनिंदादुःसहासीत् इदानींतुतांनगणयामीत्याह तवेति आशिषाकामेन असक्तैर्निष्कामैःरचितधियममभिनिवेशितचित्तम् अविद्यलोकःअविद्यः विद्याहीनोलोकः मामाम् यद्यपविद्धंजपति आचारभ्रष्टंजपति तज्जल्पनंतवयः परोऽनुग्रहस्तेन त्वत्पराणांवायोऽनुग्रहस्तेन २९

भृगुरुक्तस्वभावनस्तत्त्वज्ञानहीनाजीवाः अतोऽज्ञानकृतंममदुश्चेष्टितंक्षमस्वेत्याह यन्माययेति आत्मन्नात्मनिश्रितमनुगतं नवतत्त्वंनविदंति प्रणतानामात्माबंधुश्च ३० ब्रह्मादयोनविदंतीति भृगुणोक्तेतदसहमानोब्रह्मातत्त्वज्ञानमाविष्कुर्वन्निवाह नैतदिति पदार्थभेदग्राहकैरिंद्रियैर्गुणस्येंद्रियस्य यद्वा ज्ञानार्थयोःकारणस्यसत्त्वादेः अतएव असतःमायामयात् व्यतिरिक्तोभवान् ३१ इंद्रस्तइंद्रियविषयः सर्वोऽपिमिथ्येतिब्रह्मणोक्तमसहमानआह इदंतववपुरपिउपपन्नमेवनतुप्रपंचवदनिर्वचनीयतयाऽनुपपन्नम् सुराणांविद्विषः क्षपयंतीतितथातैर्भुजदंडैरुपलक्षितम् ३२ ऋत्विजांपत्न्यःस्तुवंति यज्ञोऽयंनव-

भृगुरुवाच यन्माययागहनयाऽपहृतात्मबोधाब्रह्मादयस्तनुभृतस्तमसिस्वपंतः नात्मन्श्रितंतवविदंत्यधुनाऽपितत्त्वंसोयंप्रसीदतुभवान्प्रणतात्मबंधुः ३० ब्रह्मोवाच नैतत्स्वरूपंभवतोऽसौपदार्थभेदग्रहैःपुरुषोयावदीक्षेत् ज्ञानस्यचार्थस्यगुणस्यचाश्रयोमायामयाद्व्यतिरिक्तोयतस्त्वम् ३१ इंद्रउवाच इदमप्यच्युतविश्वभावनंवपुरानंदकरंमनोदृशाम् सुरविद्विट्क्षपणैरुदायुधैर्भुजदंडैरुपपन्नमष्टिभिः ३२ पत्न्यऊचुः यज्ञोऽयंतवयजनायकेनसृष्टोविध्वस्तःपशुपतिनाद्यदक्षकोपात् तंनस्त्वंशवशयनाभशांतमेधंयज्ञात्मन्नलिनरुचादृशापुनीहि ३३ ऋषयऊचुः अनन्वितंतेभगवन्विचेष्टितंयदात्मनाचरसिहिकर्मनाज्यसे विभूतयेयतउपसेदुरीश्वरींनमन्यतेस्वयमनुवर्त्ततींभवान् ३४

यजनाय त्वांयष्टुंकेनब्रह्मणापूर्वंसृष्टः हेयज्ञात्मन् तंनोयज्ञंनलिनकांत्यादृशानेत्रेणपुनीहि पवित्रंकुरु कथंभूतंयज्ञम् शवाःशेरते यस्मिन्निति शवशयनं श्मशानं तद्वदाभाप्रतीतिर्यस्यसचासौशांतमेधश्चोपरतोत्सवः मेधशब्देनपशुहिंसाद्युत्सवोलक्ष्यते शवमुदकंतत्रशेते इतितथापद्मंतन्नाभेतिसंबोधनंवा ३३ ऋषयस्तुकर्माण्यनुतिष्ठंतस्तत्पुण्येन तत्फलेनचयुज्यंते भगवतितुतदभावमालक्ष्यविस्मिताःस्तुवंति अनन्वितमघटमानंयद्यस्मादात्मनास्वयंकर्माचरसि अनुतिष्ठसि नत्वज्यसेलिप्यसे यतश्चान्येविभूतयेसंपदेईश्वरींउपसेदुः लक्ष्मींभेजुः यद्वा यतइतिसार्वविभक्तिकस्तसिःयामित्यर्थः भवांस्तुस्वयमेवानुवर्तमानांतांनमन्यतेनाद्रियते ३४

सिद्धास्त्वत्कथारसमभिनंदंतः स्तुवंति अयंनोमनोगजः त्वत्कथैवमृष्टंशुद्धंपीयुषंतन्मयीयानदीतस्यामवगाढःप्रविष्टोदा
वाग्नितुल्यंसंसारतापंनसंस्मरतिनचततोनिर्गच्छति ब्रह्मसंपन्नवत् ब्रह्मैक्यंप्राप्तइव ३५ यजमानीदक्षपत्नीस्तौति तेस्वाग
केवलंप्रयाजाद्यंगैर्मखोनशोभते अतोनःश्रियासह त्रायस्वत्वद्भक्तान्कुर्वित्यर्थः ३६ लोकपालास्त्वीश्वरत्वाभिमानारूढाभगव
तस्तत्त्वमपश्यंतःऊचुः दृष्टः किंनदृष्टइत्यर्थः कुतः असद्ग्रहैः पुंस्त्वमाविष्टलिंगत्वादसत्प्रकाशरूपाभिः दृग्भिरिंद्रियैः अयंभावः

सिद्धाऊचुः अयंत्वत्कथामृष्टपीयूषनद्यांमनोवारणःक्लेशदावाग्निदग्धः तृषार्तोऽवगाढोनस
स्मारदावंननिष्क्रामतिब्रह्मसंपन्नवन्नः ३५ यजमान्युवाच स्वागतंतेप्रसीदेशतुभ्यंनमः
श्रीनिवासश्रियाकांतयात्राहिनः त्वामृतेऽधीश नांगैर्मखःशोभतेशीर्षहीनःकबंधोयथापूरुषः
३६ लोकपालाऊचुः दृष्टःकिंनोदृग्भिरसद्ग्रहैस्त्वंप्रत्यग्द्रष्टादृश्यतेयेनदृश्यम् मायाह्येषाभ
वदीयाहिभूमन्यस्त्वंषष्ठःपंचभिर्भासिभूतैः ३७ योगेश्वराऊचुः प्रेयान्नतेऽन्योऽस्त्यमु
तस्त्वयिप्रभोविश्वात्मनीक्षेन्नपृथग्यआत्मनः अथापिभक्त्येशतयोपधावतामनन्यवृत्त्याऽनु
गृहाणवत्सल ३८

शुद्धचित्तानांत्वंशुद्धसत्वमूर्तिर्भासि अस्माकंतुबहिर्मुखेंद्रियाणांपंचभूतोपलक्षितोजीववि
शेषइवावभासि अतस्त्वमस्मादिंद्रियगोचरोनभवसिधिगस्मज्जीवितमिति ३७ योगेश्वरास्तदभेदेनभजतामनुग्रहमात्मनः
न्यमानाःस्वामिभृत्यभावेनभजतामप्यनुग्रहंप्रार्थयमानाःस्तुवंतिद्वाभ्याम् प्रेयानिति विश्वात्मनिपरब्रह्मणि त्वयिआत्म-
नःपृथक्त्वंनेक्षेत अमुतःअमुष्मादन्यःतेप्रेष्ठोनास्ति आत्मनोजीवान् पृथक्नेक्षेतेतिवा हेवत्सलभक्तजनप्रिय अनन्यवृ
त्त्याअव्यभिचारिण्याभक्त्याभजतोऽनुग्रहाणेत्यर्थः ३८ ५ ५ ५ ५

अव्यभिचारिणीभक्तिः कथंस्याद्भजनीयानां बहुत्वादित्याशंक्याहुः जगतउद्भवादिषु निमित्तेषु देवतोजीवादृष्टाद्बहुधाभिद्यमा
नागुणायस्यास्तयास्वमाययात्मनिस्वरूपेरचिताब्रह्मादिभेदमतिर्येनतस्मै स्वसंस्थयाकेवलस्वरूपावस्थानेनचविनिवर्त्तितो-
भेदभ्रमोगुणाश्चतद्धेतव आत्मनियेनतस्मै ३९ शब्दब्रह्मस्तौति नमस्तइति श्रितंस्वीकृतंसत्वंयेन अतः भक्त्यादिफलप्रसवित्रेस
त्वगुणत्वंनिर्गुणत्वंचैकस्यकथमित्याशंक्याह यस्यकाष्ठांतत्त्वंनाहंवेद्मि अपरेब्रह्मादयश्चनविदुस्तस्मै ४० अग्निस्तंयज्ञमूर्तिं
प्रणमति यस्यतेजसाक्रतुसमिद्धंप्रदीप्तंतेजोयस्य सोऽहंप्रशस्ते अध्वरेहविर्वहामितंयज्ञियंयज्ञायहितंपालकम् यज्ञंयज्ञमूर्ति
म् पंचविधत्वमैतरेयकेउक्तम् सएषयज्ञः पंचविधोऽग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यानिपशुः सोमइतिपंचभिर्यजुर्भिर्मंत्रैः

जगदुद्भवस्थितिलयेषुदेवतोबहुभिद्यमानगुणयात्ममायया रचितात्मभेदमतयेस्वसंस्थयाविनि
वर्त्तितभ्रमगुणात्मनेनमः ३९ ब्रह्मोवाच नमस्तेश्रितसत्त्वायधर्मादीनांचसूतये निर्गु
णायचयत्काष्ठांनाहंवेदापरेऽपिच ४० अग्निरुवाच यत्तेजसाऽहंसुसमिद्धतेजाहव्यंवहे
स्वध्वरआज्यसिक्तम् तंयज्ञियंपंचविधंचपंचभिःस्विष्टंयजुर्भिःप्रणतोस्मियज्ञम् ४१ देवाऊचुः
पुराकल्पापायेस्वकृतमुदरीकृत्यविकृतंत्वमेवाद्यस्तस्मिन्सलिलउरगेंद्राधिशयने पुमान्शेषेसिद्धै
र्हृदिविमृशिताध्यात्मपदवीःसएवाद्याक्ष्णोर्यःपथिचरसिभृत्यानवसिनः ४२ ७

स्विष्टंसुपूजितम् तथाचश्रुतिः ओश्रावयेतिचतुरक्षरमस्तुश्रौषडितिचतुरक्षरंयजेतिद्व्यक्षरंयेयजामहइतिपंचाक्षरंद्व्य
क्षरोवषट्कारः स्मृतिश्च चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदत्विति ४१ देवास्तुस
त्वंवयमपिदेवास्तथाऽपिजगदाद्यंतयोस्त्वमेवनान्यः कश्चिदित्याहुःपुरेति कल्पापायेप्रलयेविकृतंकार्यजातमुदरीकृत्यसंहृत्य
त्वमेवाद्यःपुमान् उरगेंद्रएवाधिकम् शयनंशय्यातस्मिन् शेषेशयनंकरोषि सिद्धैर्जनलोकादिवासिभिः विमृशिताविचिंति
ताऽध्यात्मपदवीज्ञानमार्गोयस्यसएवत्वंयइदानीमक्ष्णोः पथिचरसिप्रत्यक्षोसि अवसिरक्षसि ४२ ७

गंधर्वाप्सरसस्तु वयं भियाकेवलंसर्वानपि परमेश्वरत्वेनोपश्लोकयामः त्वमेवतुपरमेश्वरः अन्येतुत्वदंशाएवेत्याहुः अंशांशाइति हे भूमन् महत्तम क्रीडाभांडंक्रीडोपकरणंविश्वंब्रह्मांडंयस्यतस्मैतेनमनंकुर्यः ४३ विद्याधरास्तुकेवलंविद्याभिः संपदः प्राप्यंतेअहंकारादिव्यामोहनिवृत्तिस्तुत्वत्कथाश्रवणंविनानास्तीत्याहुः अर्थंपुरुषार्थसाधनंकलेवरमभिपद्यप्राप्यत्वन्मायया ऽस्मिन्ममेत्यहमितिचाभिमानंकृत्वाइममात्ममोहंयुष्मत्कथामृतनिषेवकउत् उच्चैर्व्युदस्येत्संरित्यजेन्नान्यननुस्वैःपुत्रादिभिरधिक्षिप्तोदुःखितःसन् परित्यजेदेवनेत्याहुः क्षिप्तोऽपिदुर्मतिः असत्सुविषयेष्वेवलालसातृष्णायस्यसः ४४ ब्राह्मणाःस्तुवंतित्वमिति

गंधर्वाऊचुः अंशांशास्तेदेवमरीच्यादयएतेब्रह्मेंद्राद्यादेवगणारुद्रपुरोगाः क्रीडाभांडंविश्वमिदंयस्य चभूमन्तस्मैनित्यंनाथनमस्तेकरवाम ४३ विद्याधराऊचुः त्वन्मायया ऽर्थमभिपद्यकलेवरे ऽस्मिन् कृत्वाममाहमितिदुर्मतिरुत्पथैः स्वैः क्षिप्तो ऽप्यसद्विषयलालसआत्ममोहंयुष्मत्कथा ऽमृतनिषेवकउद्व्युदस्येत् ४४ ब्राह्मणाऊचुः त्वंक्रतुस्त्वंहविस्त्वंहुताशःस्वयंत्वंहिमंत्रःसमिद्दर्भपात्राणिच त्वंसदस्यर्त्विजोदंपतीदेवताअग्निहोत्रंस्वधासोमआज्यंपशुः ४५ त्वंपुरागांरसायामहासूकरोदंष्ट्रयापद्मिनींवारणेंद्रोयथा स्तूयमानोनदंल्लीलयायोगिभिर्व्युज्जहर्थत्रयीगात्रयज्ञक्रतुः ४६ सप्रसीदत्वमस्माकमाकांक्षतांदर्शनंतेपरिभ्रष्टसत्कर्मणाम् कीर्त्यमानेनृभिर्नाम्नियज्ञेशतेयज्ञविघ्नाः क्षयंयांतितस्मैनमः ४७ मैत्रेयउवाच इतिदक्षःकविर्यज्ञंभद्ररुद्राभिमर्शितम् कीर्त्यमानेहृषीकेशेसंनिन्येयज्ञभावने ४८

तित्रिभिः सदस्याश्चऋत्विजश्च ४५ गांपृथ्वीम् रसायाः रसातलात् दंष्ट्रयाव्युज्जहर्थविशेषेणोद्धृतवानसि योगिभिस्तूयमानः हेत्रयीगात्र वेदमूर्ते यज्ञोयाग ः सयूपः क्रतुस्तद्विशेषः तद्रूपी यज्ञसंकल्परूपइति यज्ञः क्रतुः कर्मयस्येतिवा ४६ सत्वमस्माकंत्वद्दर्शनमाकांक्षतांप्रसीद अस्मद्यज्ञमपुनरुद्धरेत्यर्थः नचाशक्यंतवएतत् यतस्तवनाम्निकीर्त्यमानएवयज्ञविघ्नाःक्षयंयांति एवंप्रभावोयस्तस्मैनमः ४७ इत्यनेनप्रकारेणसर्वैःकीर्त्यमाने हेभद्रविदुर संनिन्ये प्रवर्त्तयामास ४८

सर्वात्मत्वात्सर्वभागभोक्ताऽपिभगवान्निजानंदतृप्तोऽपिस्वेनभागेनत्रिकपालपुरोडाशेनप्रीयमाणइवदक्षमाभाष्यसंबोध्यवक्ष्यमाणं बभाषे ४९ योऽहंजगतः कारणंआत्मानेश्वरश्चउपद्रष्टासाक्षीचस्वयंप्रकाशश्चनिरुपाधिश्चसएवब्रह्माशर्वश्चेत्यन्वयः ५० कुत इत्यतआह अहमेवात्ममायामधिष्ठायजगत्सृष्ट्यादिकुर्वन्सन्सत्वक्रियोचितांसंज्ञांधारयामि ५१ तस्मिन्केवलेऽद्वितीयेसमा नासमानजातीयभेदरहितेब्रह्मणिमयिब्रह्मरुद्रौभूतानिचभेदेनाज्ञः पश्यतीत्यर्थः ५२ विद्वांस्तुभेदंनपश्यतीतिसदृष्टांतमाह

भगवान्स्वेनभागेनसर्वात्मासर्वभागभुक् दक्षंबभाषआभाष्यप्रीयमाणइवानघ ४९ श्रीभगवानुवाच अहंब्रह्माचशर्वश्चजगतःकारणंपरम् आत्मेश्वरउपद्रष्टास्वयंदृगविशेषणः ५० आत्ममायांसमाविश्यसोऽहंगुणमयींद्विज सृजन्रक्षन्हरन्विश्वंदध्रेसंज्ञांक्रियोचिताम् ५१ तस्मिन्ब्रह्मण्यद्वितीयेकेवलेपरमात्मनि ब्रह्मरुद्रौचभूतानिभेदेनाज्ञोऽनुपश्यति ५२ यथापुमान्नस्वांगेषुशिरःपाण्यादिषुक्वचित् पारक्यबुद्धिंकुरुतेएवंभूतेषुमत्परः ५३ त्रयाणामेकभावानांयोनपश्यतिवैभिदाम् सर्वभूतात्मनांब्रह्मन्सशांतिमधिगच्छति ५४ मैत्रेयउवाच एवंभगवतादिष्टःप्रजापतिपतिर्हरिम् अर्चित्वाक्रतुनास्वेनदेवानुभयतोऽयजत् ५५ रुद्रंचस्वेनभागेनह्युपाधावत्समाहितः कर्मणोदवसानेनसोमपानितरानपि उदवस्यसहर्त्विग्भिःसस्नाववभृथंततः ५६ तस्माअप्यनुभावेनस्वेनैवावाप्तराधसे धर्मएवमतिंदत्वात्रिदशास्तेदिवंययुः ५७ एवंदाक्षायणीहित्वासतीपूर्वकलेवरम् जज्ञेहिमवतःक्षेत्रेमेनायामितिशुश्रुम ५८

यथेति ५३ तस्मादेव मैक्यंपश्यन्कृतार्थोभवतीत्याह त्रयाणामेकोभावःस्वरूपंयेषाम् ५४ स्वेनक्रतुनात्रिकपालेष्टाउभयतः अंगैःप्रधानेनच ५५ स्वेनभागेनयज्ञावशिष्टेनउदवस्यतेसमाप्यतेऽनेनेत्युदवसानंतेनकर्मणासोमपानितरानपिउपधावदित्यनुषंगः ततश्चउ दवस्यकर्मसमाप्यअवभृथरूपंयथाभवतितथास्नातवान् ५६ स्वेनैवाऽनुभावेनाप्तसधसेप्राप्तसिद्धयेतस्माअपि ५७।५८

आवृत्तं के भजने स्म अनन्यभावानामेकैवगतिः यः तम् प्रलयकालेस्वप्राशक्तिरीश्वरमिव ५९ बृहस्पतेःशिष्यान्मयाश्रुतम् ६० परंपवित्रं यआकर्ण्य तथाऽनुकीर्त्तयेत्सःआत्मनः परस्यापिअघंसंसारव्यसनंसर्वदाधुनोति ६१ इतिचतुर्थेटीकायांसप्तमोऽध्यायः ७ दक्षकन्याऽन्वयेप्रोक्तादक्षयज्ञकथोदिता मनुपुत्रान्वयेप्राह्वाध्रुवचर्याऽथपंचभिः १ अष्टमेगुरुदारोक्तिरोषमत्स रतःपुरात् निर्गतेनध्रुवेणाहतपसातोषणंहरेः २ एवंतावन्मनुकन्याऽन्वयोक्त्यैवमरीच्यादीनांब्रह्मपुत्राणांवंशावर्णिताः ता

तमेवदयितंभूयआवृङ्क्तेपतिमंबिका अनन्यभावैकगतिंशक्तिःसुप्तेवपूरुषम् ५९ एतद्भगवतःशंभोःकर्मदक्षाध्वरद्रुहः श्रुतंभागवताच्छिष्यादुद्धवान्मेबृहस्पतेः ६० इदंपवित्रंपरमीशचेष्टितंयशस्यमायुष्यमघौघमर्षणम् योनित्यदाकर्ण्यनरोऽनुकीर्तयेद्धुनोत्यघंकौरवभक्तिभावतः ६१ इतिश्रीभागवतेमहापुराणेचतुर्थस्कंधेदक्षयज्ञसंधानोनामसप्तमोऽध्यायः ७

मैत्रेयउवाच सनकाद्यानारदश्चऋभुर्हंसोऽरुणिर्यतिः नैतेगृहान्ब्रह्मसुताह्यावसन्नूर्ध्वरेतसः १ मृषाऽधर्मस्यभार्यासीद्दंभंमायांचशत्रुहन् असूतमिथुनंतत्तुनिर्ऋतिर्जगृहेऽप्रजः २ तयोःसमभवल्लोभोनिकृतिश्चमहामते ताभ्यांक्रोधश्चहिंसाचयद्दुरुक्तिःस्वसाकलिः ३ दुरुक्तौकलिराधत्तभयंमृत्युंचसत्तम तयोश्चमिथुनंजज्ञेयातनानिरयस्तथा ४ संग्रहेणमयाख्यातःप्रतिसर्गस्तवानघ त्रिःश्रुत्वैतत्पुमान्पुण्यंविधुनोत्यात्मनोमलम् ५ अथातःकीर्तयेवंशंपुण्यकीर्त्तेःकुरूद्वह स्वायंभुवस्यापिमनोर्हरेरंशांशजन्मनः ६

नावशिष्टंकिंचिदाह सनकाद्याइति नावसन् नाश्रिताःऊर्ध्वरेतसोनैष्ठिकाः अतस्तेषांवंशोनास्ति १अधर्मोऽपिब्रह्मपुत्रस्तस्यवंशमाह मृषेतिचतुर्भिः दंभःपरप्रतारणम् मयातदुचितानाचेष्टानयोः सोदरयोरपिदांपत्यमधर्मांशतया एवमुपर्यपि अप्रजःअपुत्रः २ निकृतिःशठता यत्याभ्यांकलिश्चतस्यस्वसादुरुक्तिश्चेत्यर्थः ३ यातनातीव्रवेदना ४ प्रतिसर्गोऽनुसर्गएव यद्वा प्रतिसर्गःप्रलयःअधर्मस्यप्रलयहेतुत्वात्प्रतिसर्गत्वम् एतत् एतमधर्मवंशंपुण्यमितिवर्जनद्वारापुण्यहेतुत्वात् ५ मनोःपुत्रवंशंहरेरंशांशोब्रह्मातस्यांशात्देहार्द्धाज्जन्मयस्य ६

जगतोरक्षायांस्थितौ ७ सुनीतिः सुरुचिश्चजायेतयोर्मध्ये ८ तयोः प्रियाप्रियत्वंप्रपंचयन् ध्रुवचरित्रमाहपंचभिरध्यायैः सुरुचेः पुत्रमुत्तमसंज्ञंलालयन् ९ तथाअंकारोहणंचिकीर्षमाणम् १० गर्वोक्तिमेवाहत्रिभिर्नेति नृपतेर्धिष्ण्यमासनं नृपात्मजोऽपि भवान्नारोढुमर्हति ११ १२ पुरुषमीश्वरम् १३ मिषंतंपश्यंतम् सन्नवाचंकुंठितवाचम् १४ उद्धृत्य आरोप्य अंतःपुरजनसुखात्

प्रियव्रतोत्तानपादौशतरूपापतेःसुतौ वासुदेवस्यकलयारक्षायांजगतःस्थितौ ७ जायेउत्तानपादस्यसुनीतिःसुरुचिस्तयोः सुरुचिःप्रेयसीपत्युर्नेतरायत्सुतोध्रुवः ८ एकदासुरुचेःपुत्रमंकमारोप्यलालयन् उत्तमंनारुरुक्षंतंध्रुवंराजाऽभ्यनंदत ९ तथाचिकीर्षमाणंतंसपत्न्यास्तनयंध्रुवम् सुरुचिःशृण्वतोराज्ञःसेर्ष्यमाहातिगर्विता १० नवत्सनृपतेर्धिष्ण्यंभवानारोढुमर्हति नगृहीतोमयायत्त्वंकुक्षावपिनृपात्मजः ११ बालोऽसिबतनात्मानमन्यस्त्रीगर्भसंभृतम् नूनंवेदभवान्यस्यदुर्लभेऽर्थेमनोरथः १२ तपसाराध्यपुरुषंतस्यैवानुग्रहेणमे गर्भेत्वंसाधयात्मानंयदीच्छसिनृपासनम् १३ मैत्रेयउवाच मातुःसपत्न्याःसदुरुक्तिविद्धःश्वसन्रुषादंडहतोयथाऽहिः हित्वामिषंतंपितरंसन्नवाचंजगाममातुःप्ररुदन्सकाशम् १४ तंनिःश्वसंतंस्फुरिताधरोष्ठंसुनीतिरुत्संगउद्धृह्यबालम् निशम्यतत्पौरमुखान्नितांतंसाविव्यथेयद्गदितंसपत्न्याः १५ सोत्सृज्यधैर्यंविललापशोकदावाग्निनादावलतेवबाला वाक्यंसपत्न्याःस्मरतीसरोजश्रियादृशाबाष्पकलामुवाह १६ दीर्घंश्वसंतीवृजिनस्यपारमपश्यतीबालकमाहबाला मामंगलंतातपरेषुमंस्थाभुंक्तेजनोयत्परदुःखदस्तत् १७ सत्यंसुरुच्याऽभिहितंभवान्मेयद्दुर्भगायाउदरेगृहीतः स्तन्येनवृद्धश्चविलज्जतेयांभार्येतिवावोढुमिडस्पतिर्माम् १८

श्रुत्वा १५ शोकएवदावाग्निस्तेन दावाग्निगतालताइवस्थितासाबालाविलापंचकार १६ वृजिनस्यदुःखस्य अमंगलमपराधंपरेषुमामंस्थाः यत् यतः परेभ्योदुःखंददातियः सः स्वदत्तमेवदुःखंभुंक्ते १७ दुर्भगयामयाउदरेगृहीतः तस्याएवस्तन्येनवृद्धश्च दुर्भगत्वमेवाह यांमामिडस्पतिर्भूपतिर्भार्येतिवोढुंस्वीकर्त्तुंविलज्जतेवाशब्दाद्दासीत्यपि

पितृभार्यात्वेनमात्रासमामातुः सपत्नीतयाऽपियदुक्तंतपसाराध्यपुरुषमित्यादिनदातिष्ठकुरु अध्यासनंयदीच्छसि १९ परि चर्यनिषेव्य विश्वविभावनायपालनायात्तास्वीकृतागुणाभिपत्तिः सत्त्वगुणाधिष्ठानंयेनतस्य जितआत्मामनः श्वसनःप्राणश्च येस्तैरभिवंद्यम् २० एकमत्यासर्वांतर्यामिदृष्ट्या २१ मृग्यापदाब्जयोःपद्धतिर्मार्गोयस्य तमेवाश्रयशरणंव्रजततोभजस्व नान्य

आतिष्ठतत्तातविमत्सरस्त्वमुक्तंसमात्राऽपियदव्यलीकम् आराधयाधोऽक्षजपादपद्मंयदीच्छ-सेऽध्यासनमुत्तमोयथा १९ यस्यांघ्रिपद्मंपरिचर्यविश्वविभावनायात्तगुणाभिपत्तेः अजोऽध्यति-ष्ठत्खलुपारमेष्ठ्यपदंजितात्मश्वसनाभिवंद्यम् २० तथामनुर्वोभगवान्पितामहोयमेकमत्यापुरुद क्षिणैर्मखैः इष्ट्वाऽभिपेदेदुरवापमन्यतोभौमंसुखंदिव्यमथापवर्ग्यम् २१ तमेववत्साश्रयभृत्य वत्सलंमुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् अनन्यभावेनिजधर्मभाविते मनस्यवस्थाप्यभजस्वपूरुष म् २२ नान्यंततःपद्मपलाशलोचनात्दुःखच्छिदंतेमृगयामिकंचन योमृग्यतेहस्तगृहीतपद्म याश्रियेतरैरंगविमृग्यमाणया २३ मैत्रेयउवाच एवंसंजल्पितंमातुराकर्ण्यार्थागमंवचः संनियम्यात्मनात्मानंनिश्चक्रामपितुःपुरात् २४ नारदस्तदुपाकर्ण्य ज्ञात्वातस्यचिकीर्षितम् स्पृष्ट्वा मूर्धन्यघघ्नेनपाणिनाप्राहविस्मितः २५ अहोतेजःक्षत्रियाणांमानभंगममृष्यताम् बालोऽप्ययं हृदाधत्तेयत्समातुरसद्वचः २६ नारदउवाच नाधुनाऽप्यवमानंतेसम्मानंवाऽपिपुत्रक लक्षयामःकुमारस्यसक्तस्यक्रीडनादिषु २७ विकल्पेविद्यमानेऽपिनह्यसंतोषहेतवः पुंसोमोहमृ तेभिन्नायल्लोकेनिजकर्मभिः २८

स्मिन् भावोयस्यतस्मिन् निजधर्मैर्भाविते शोधिते २२ तमेवेत्यनेनसूचितंसर्वो-त्तमत्वंप्रपंचयति नान्यमिति हस्तेनगृहीतंदीपवत्सद्मंयया इतरैर्ब्रह्मादिभिः २३ संजल्पितंविलापंततः अर्थस्यागमोयस्मात्त थाभूतंवचनआकर्ण्य २४ २५ विस्मितइत्युक्तंतदेवाह अहोतेजःप्रभावः २६ २७ विकल्पेमानापमानविवेकेसत्यपिभिन्नानरां-तिकिंतुमोहकल्पिताएवेत्यर्थः कुतः यत्सुखंदुःखंवातन्निजकर्मभिरेवप्रवर्तितयतः २८ ध्रु॰ ध्रु॰ ध्रु॰

उपशमोपदेशेननिवर्त्तयति परितुष्येदितिषड्भिः ईश्वरगतिंवीक्ष्य ईश्वरानुकूल्यंविनानोद्यमाः फलहेतवइतिज्ञात्वापरितुष्येत्संतो
षमेवकुर्यात् २९ दुष्करस्त्वनवायमुद्यमइत्याह अथेतिद्वाभ्याम् यस्यप्रसादमवरोद्धुंप्राप्तुमिच्छसि ३० निःसंगेनतीव्रयोगेनसमा-
धिनामृगयंतोऽपियस्यपदवींमार्गंनविदुःसदेवोदुराराध्यः ३१ श्रेयसांकालेहन्द्वृत्ते ३२ सुखदुःखयोर्मध्येसुखेसतिपुण्यंक्षीय-
तइतिदुःखेसतिपापंक्षीयतइत्यात्मानंतोषयन् तमसःपारंमोक्षंप्राप्नोति ३३ किंच गुणैरधिकात्पुंसइतिल्यब्लोपेपंचमी तंदृष्ट्वा

परितुष्येत्ततस्तातताबन्मात्रेणपूरुषः दैवोपसादितंयावद्वीक्ष्येश्वरगतिंबुधः २९ अथमात्रोप
दिष्टेनयोगेनावरुरुत्ससि यत्प्रसादंसवैपुंसांदुराराध्योमतोमम ३० मुनयःपदवींयस्यनिःसंगेनो
रुजन्मभिः नविदुर्मृगयंतोऽपितीव्रयोगसमाधिना ३१ अतोनिवर्ततामेषनिर्बंधस्तवनिष्फलः
यतिष्यतिभवान्कालेश्रेयसांसमुपस्थिते ३२ यस्ययद्दैवविहितंसतेनसुखदुःखयोः आत्मा
नंतोषयन्देहीतमसःपारमृच्छति ३३ गुणाधिकान्मुदंलिप्सेदनुक्रोशंगुणाधमात् मैत्रींसमा
नादन्विच्छेन्नतापैरभिभूयते ३४ ध्रुवउवाच सोऽयंशमोभगवतासुखदुःखहतात्मना
म् दर्शितःकृपयापुंसांदुर्दर्शोऽस्मद्विधैस्तुयः ३५ अथापिमेऽविनीतस्यक्षात्त्रंघोरमुपेयुषः
सुरुच्यादुर्वचोबाणैर्नभिन्नेश्रयतेहृदि ३६ पदंत्रिभुवनोत्कृष्टंजिगीषोःसाधुवर्त्ममे ब्रूह्यस्मत्पि
तृभिर्ब्रह्मन्नन्यैरप्यनधिष्ठितम् ३७ नूनंभवान्भगवतोयोऽंगजःपरमेष्ठिनः वितुदन्नटतेवीणां
हितार्थंजगतोऽर्कवत् ३८ मैत्रेयउवाच इत्युदाहृतमाकर्ण्यभगवान्नारदस्तथा
प्रीतःप्रत्याहतंबालंसद्वाक्यमनुकंपया ३९

प्रीतिंकुर्यात् नलसूयामित्यर्थः अनुक्रोशंकृपांलिप्सेत् न
तुतिरस्कारंसमानान्मैत्रींनतुस्पर्धाम् ३४ ३५ क्षात्त्रंस्वभावंप्राप्तवतः अतएवाविनीतस्यदुर्वाक्यबाणैर्भिन्नेहृदिनश्र
यतेनातिष्ठति ३६ अन्यैरनधिष्ठितंत्रिभुवनेउत्कृष्टंपदंजेतुमिच्छोर्मेसाधुवर्त्ममार्गंब्रूहि ३७ अंकजइतिपाठेऽत्संगाज्जातोयोना
रदःसभवान् वीणांवितुदन्वादयन् हितायअटति ३८ ३९ ५ ५ ५

निःश्रेयसस्य अभिप्रेतार्थस्य पंथाः कोऽसावित्यत आह भगवान्वासुदेवः अतएवतंभज ४० ४१ मधुवनाख्यंयमुनायास्तटं गच्छयत्रमधुवने ४२ अध्ययनाद्यभावेऽपिआत्मनउचितानियोग्यानिदेवतानमस्कारादीनिकृत्वेतियमनियमाउक्ताः आसन कल्पितंकुशादिभिः स्वस्तिकादिभिश्च ४३ प्राणेंद्रियमनसांमलंचांचल्यंव्युदस्येतिप्राणायामप्रत्याहारौ धारणामाह अभिध्या येत्यादिपङ्क्तिः गुरुणाधीरेणमनसागुरुंश्रीहरिम् ४४ सुरेषुसुंदरम् ४५ रमणीयान्यंगानियस्य ओष्ठश्चईक्षणाच्चईक्षण-

नारदउवाच जनन्याभिहितःपंथाःसवैनिःश्रेयसस्यते भगवान्वासुदेवस्तंभजतंप्रवणात्मना ४० धर्मार्थकाममोक्षार्थंयइच्छेच्छ्रेयआत्मनः एकमेवहरेस्तत्रकारणंपादसेवनम् ४१ तत्तातगच्छभद्रंतेयमुनायास्तटंशुचि पुण्यंमधुवनंयत्रसान्निध्यंनित्यदाहरेः ४२ स्नात्वानुसवनंतस्मिन्कालिंद्याःसलिलेशिवे कृत्वोचितानिनिवसन्नात्मनःकल्पितासनः ४३ प्राणायामेनत्रिवृताप्राणेंद्रियमनोमलम् शनैर्व्युदस्याभिध्यायेन्मनसागुरुणागुरुम् ४४ प्रसादाभिमुखंशश्वत्प्रसन्नवदनेक्षणम् सुनासंसुभ्रुवंचारुकपोलंसुरसुंदरम् ४५ तरुणंरमणीयांगमरुणोष्ठेक्षणाधरम् प्रणताश्रयणंनृम्णंशरण्यंकरुणार्णवम् ४६ श्रीवत्सांकंघनश्यामंपुरुषंवनमालिनम् शंखचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ४७ किरीटिनंकुंडलिनंकेयूरवनमालिनम् कौस्तुभाभरणग्रीवंपीतकौशेयवाससम् ४८ कांचीकलापपर्यस्तंलसत्कांचननूपुरम् दर्शनीयतमंशांतंमनोनयनवर्द्धनम् ४९ पद्भ्यांनखमणिश्रेण्याविलसद्भ्यांसमर्चताम् हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ५०

मरुणेओष्ठेक्षणेधारयतीतितथातम् अरुणमोष्ठमीक्षणंचधारयतीतिवा नृम्णंसुखकरम् यद्वा नृम्णंधनंसर्वपुरुषार्थनिधिमित्यर्थः ४६ पुरुषंपुरुषलक्षणयुक्तम् ४७ कौस्तुभस्याभरणंग्रीवायांयस्य ४८ कांचीकलापेनपर्यस्तंपरिवेष्टितम् मनोनयनयोर्वर्धनंहर्षकरम् ४९ हृत्पद्मकर्णिकायांधिष्ण्यंमध्यस्थानंतदाक्रम्यसमर्चतामात्मनिमनसिस्थितम् ५०

इदानींराज्यस्यापकर्षंनिरूपयितुमुत्कर्षंनिगमयति युधिष्ठिरइति कुलंधरंवंशधरम् १५ तदीहयागृहव्यापारेणप्रमत्तानामत्यन्तकाम
न् आयुः कालः अतिक्रांतः यद्वा नानर्थ [illegible] १६ अभिप्रेत्य [illegible] १७ [illegible] कारः क्रियतांकिंनिर्गमनेनतत्राह प्रतिक्रिये
तिसर्वेषामिति यैःप्रतिकर्त्तव्यंतेषामपीत्यर्थः १८ कथंधनादिवियोगः सोढुंशक्यः अतआह येनचेतिअभिपन्नः अभिग्रस्तः १९
तत्रावस्थानमतिदैन्यमितिदर्शयन्वैराग्यमुत्पादयतिपितृभ्रात्रितिसप्तभिः आत्माचदेहः २० येनपुत्राहतास्तेनभीमेनदत्तंपिंडमन्नं
गृहपालइव गृहपालःश्वा २१ निसृष्टःप्रक्षिप्तःगरोविषम् दूषिताः अवमताः तदत्तैरन्नादिभिर्लब्धैरसुभिःकियत्प्रयोजनंनकिं

युधिष्ठिरोलब्धराज्योदृष्ट्वापौत्रंकुलंधरम् भ्रातृभिर्लोकपालाभैर्मुमुदेपरयाश्रिया १५ एवंगृहेषुसक्तानां
प्रमत्तानांतदीहया अत्यक्रामदविज्ञातःकालःपरमदुस्तरः १६ विदुरस्तदभिप्रेत्यधृतराष्ट्रमभाषत राजन्नि
र्गम्यतांशीघ्रंपश्येदंभयमागतम् १७ प्रतिक्रियानयस्येहकुतश्चित्कर्हिचित्प्रभो सएवभगवान्कालःसर्वेषान्नः
समागतः १८ येनचैवाभिपन्नोऽयंप्राणैःप्रियतमैरपि जनःसद्योवियुज्येतकिमुतान्यैर्धनादिभिः १९ पितृभ्रा
तृसुहृत्पुत्राहतास्तेविगतंवयः आत्माचजरयाग्रस्तःपरगेहमुपाससे २० अहोमहीयसीजंतोर्जीविताशाययाभ
वान् भीमेनावर्जितंपिंडमादत्तेगृहपालवत् २१ अग्निर्निसृष्टोदत्तश्चगरोदाराश्चदूषिताः हृतंक्षेत्रंधनंयेषांत
द्दत्तैरसुभिःकियत् २२ तस्यापितवदेहोऽयंकृपणस्यजिजीविषोः परैत्यनिच्छतोजीर्णोजरयावाससीइव २३
गतस्वार्थमिमंदेहंविरक्तोमुक्तबंधनः अविज्ञातगतिर्जह्यात्सवैधीरउदाहृतः २४ यःस्वकात्परतोवेहजातनिर्वे
दआत्मवान् हृदिकृत्वाहरिंगेहात्प्रव्रजेत्सनरोत्तमः २५ अथोदीचींदिशंयातुस्वैरज्ञातगतिर्भवान् इतोऽर्वाक्
प्रायशःकालःपुंसांगुणविकर्षणः २६

चिदित्यर्थः २२ तस्यापिएवंदैन्यमनुभवतोऽपिपरैति क्षीयते अतएवधीरोभवेति २३ किं
लक्षणोधीरइत्यपेक्षायामाह गतस्वार्थंयशोधर्मादिशून्यम् मुक्तबंधनःत्यक्ताभिमानः क्वगतइत्यविज्ञातागतिर्यस्यसः धीरःप्राप्तदुःखस्य
स्वयंसहनेनमुक्तिप्राप्तेः २४ नरोत्तमस्तुततःप्रागेवकृतप्रतीकारःस्वकात्स्वतएव परतःपरोपदेशतोवा २५ त्वंतुनरोत्तमोनाभूः अतइदा
नींधीरोभवइत्याह अथेति अर्वाक् अर्वाचीनःएष्यन्नित्यर्थः गुणान्धैर्यदयादीन्विकर्षतिआच्छिनत्तीतितथा २६ ७ ७

अजमीढः अजमीढवंशजः प्रज्ञाचक्षुरंधः एवंबोधितःसन् दृढिमः निःस्नेहान् भ्रात्रासंदर्शितः अध्वा बंधमोक्षयोमार्गोयस्य सः २७ सुबलस्यपुत्री गांधारी साध्वी सुशीला हिमालयंप्रयांतंपतिमनुजगाम ननु कथं सासुकुमारीहिमादिदुःखबहुलंहिमवंतं गताअतआह न्यस्तदंडानांप्रहर्षोयस्मिन्तम् दुःखदमपिकेषांचित्प्रहर्षहेतुर्भवतीत्यत्र दृष्टांतः मनस्विनांशूराणांयुद्धेसन्तीव्रःप्रहारोयथा पाठांतरेसत्संप्रहारंसुद्धयथेति २८ कृतंमैत्रंमित्रदैवत्यंसंध्यावदनंयेन नत्वासंपूज्य पितरौविदुरधृतराष्ट्रौ २९ हेगावल्गाने गवल्गानस्यपुत्रसंजय ३० अकृतप्रज्ञमंदमतौ शमलमपराधम् आशंसमानः आशंकमानः भार्ययासह ३१ यौअरक्षतांतौ इतः



एवंराजाविदूरेणानुजेनप्रज्ञाचक्षुर्बोधितोह्याजमीढः छित्वास्वेषुस्नेहपाशान्द्रढिम्नोनिश्चक्रामभ्रातृसंदर्शिताध्वा २७ पतिंप्रयांतंसुबलस्यपुत्रीपतिव्रताचानुजगामसाध्वी हिमालयंन्यस्तदंडप्रहर्षंमनस्विनामिवसत्संप्रहारः २८ अजातशत्रुः कृतमैत्रोहुताग्निर्विप्रान्नत्वातिलगोभूमिरुक्मैः गृहंप्रविष्टोगुरुवंदनायनचापश्यत्पितरौसौबलीञ्च २९ तत्रसंजयमासीनंपप्रच्छोद्विग्नमानसः गावल्गाने क्वनस्तातोवृद्धोहीनश्चनेत्रयोः ३० अंबा चहतपुत्रार्त्तापितृव्यःक्वगतःसुहृत् अपिमय्यकृतप्रज्ञेहतबंधुःसभार्यया आशंसमानःशमलंगंगायांदुःखितोऽपतत् ३१ पितर्युपरतेपांडौसर्वान्नःसुहृदःशिशून् अरक्षतांव्यसनतः पितृव्यौक्वगतावितः ३२ सूतउवाच कृपयास्नेहवैक्लव्यात्सूतोविरहकर्शितः आत्मेश्वरमचक्षाणोनप्रत्याहातिपीडितः ३३ विमृज्याश्रूणिपाणिभ्यांविष्टभ्यात्मानमात्मना अजातशत्रुंप्रत्यूचेप्रभोःपादावनुस्मरन् ३४ संजयउवाच नाहंवेदव्यवसितंपित्रोर्वःकुलनंदन गांधार्यावामहाबाहोमुषितोऽस्मिमहात्मभिः ३५ अथाजगामभगवान् नारदःसहतुंबरुः प्रत्युत्थायाभिवाद्याहसानुजोऽभ्यर्चयन्निव ३६

स्थानात् ३२ कृपयास्नेहवैक्लव्याच्चातिपीडितः आत्मेश्वरंधृतराष्ट्रमपश्यन् विरहकर्शितश्चसूतःसंजयोनप्रत्युत्तरमाह ३३ आत्मनाबुद्ध्या आत्मानंमनोविष्टभ्यधैर्ययुक्तंकृत्वाप्रभोर्धृतराष्ट्रस्य ३४ गांधार्याश्चव्यवसितंनिश्चितम् यतोमुषितोवंचितोऽस्मीति ३५ एवंकंचित्कालंशोचतितस्मिन् अथनारदआजगाम अत्रास्तिक्वचित्पुस्तकेपाठांतरम् तदुक्तंध्ययथासंप्रदायंव्याख्यायते शोकवेगादभ्यर्चयन्निवाह राजानमभ्यर्चयत् ३६

नाहंवेदवेद्मि तपस्विनीदुःखयुक्ता अपारेशोकार्णवेभगवान्त्वमेवपारदर्शकः अतोब्रूहीतिशेषः ३७ आदावेवयथावृत्तकथने-
शोकेनमूर्च्छितः पतेदितिप्रथमंतावच्छोकमुपशमयति माकंचनशुचः माशोच नकेवलंतानेव यद्यस्मादीश्वराधीनंजगत् ३८ तदे
वाह लोकाइति ३९ ४० प्रवृत्तौपारतंत्र्यमुक्त्वासंयोगवियोगयोरप्याह यथेति क्रीडोपस्कराणांक्रीडासाधनानाम् ४१ ईश्वराधी
नत्वान्नशोकः कार्यइत्युक्तम् लोकतत्त्वेविचार्यमाणेनिर्विषयोऽयंशोकइत्याह यद्यदिलोकंजनंध्रुवंजीवरूपेण अध्रुवंदेहरूपेण नचे
नि नध्रुवंनाप्यध्रुवंशुद्धब्रह्मरूपेणअनिर्वचनीयत्वेनवा उभयंवाचिज्जडांशातः सर्वथाचतुर्ष्वपिपक्षेषुतेपित्रादयोनशोच्याः स्नेहाद

युधिष्ठिरउवाच नाहंवेदगतिंपित्रोर्भगवन्क्वगतावितः अंबावाहतपुत्रार्त्ताक्वगताचतपस्विनी कर्णधार
इवापारेभगवान्पारदर्शकः ३७ अथाबभाषेभगवान्नारदोमुनिसत्तमः माकंचनशुचोराजन्यदीश्वरवशंजग
त् ३८ लोकाःसपालायस्येमेवहंतिबलिमीशितुः ससंयुनक्तिभूतानिसएववियुनक्तिच ३९ यथागावोन
सिप्रोतास्तंत्यांबद्धाःस्वदामभिः वाक्तंत्यांदामभिर्बद्धावहंतिबलिमीशितुः ४० यथाक्रीडोपस्कराणांसंयो
गविगमाविह इच्छयाक्रीडितुःस्यातांतथैवेशेच्छयानृणाम् ४१ यन्मन्यसेध्रुवंलोकमध्रुवंवानचोभयम् स
र्वथानहिशोच्यास्तेस्नेहादन्यत्रमोहजात् ४२ तस्माज्जह्यंगवैक्लव्यमज्ञानकृतमात्मनः कथंत्वनाथाः कृपणा
वर्त्तेरंस्त्वनमाश्रिताः ४३ कालकर्मगुणाधीनोदेहोऽयंपांचभौतिकः कथमन्यांस्तुगोपायेत्सर्पग्रस्तोयथापरम्
४४ अहस्तानिसहस्तानामपदानिचतुष्पदाम् फल्गूनितत्रमहतांजीवोजीवस्यजीवनम् ४५

न्यत्र स्नेहएवकेवलंशोकहेतुः सचाज्ञानमूलइत्यर्थः ४२ तस्मान्मांविनाकथंनेवर्त्तेरन्नितिमनसावैक्लव्यंचव्याकुलतांत्यज ४३
तत्रत्वद्देहतस्तेषांवृत्तिरेवतावन्नास्तीत्याह कालोगुणक्षोभकः कर्मजन्मनिमित्तम् गुणाउपादानम् तदधीनः पांचभौतिकःज
डः तद्विभागेनाशवांश्च सर्पग्रस्तः अजगरगिलितोयथाऽन्यंनरक्षतितद्वत् ४४ ईश्वरेणविहितावृत्तिश्चसर्वतःसुलभैवेत्याह अ
हस्तानिपश्वादीनि अपदानितृणादीनि तत्रतेषुहस्तादिष्वपिफल्गूनिअल्पानि एवंजीवःसर्वोऽपिजीवस्यसर्वस्यजीवनंजीविका
एतेनैवसर्वतोमृत्युग्रासत्वंचोक्तम् ४५ ६ ६ ६ ६

मोहनिवृत्त्यर्थं द्वैतस्यावस्तुत्वमाह तदिदमहस्तसहस्तादिरूपंजगत् स्वदृक् भगवानेव नततः पृथक् सचैकएवनतुनाना ननुसजातीयविजातीयभेदेप्रत्यक्षेकुतएतत्तत्राह आत्मनांभोक्तृणामात्मास्वरूपम् अतोनसजातीयभेदः अंतरोऽनंतरश्च अंतर्बहिश्चभोक्तृभोग्यरूपश्चभाति अतोनवाविजातीयभेदोऽपि एकः कथंतथाप्रतीयतेअतआह माययाबहुधातंपश्येति ४६ क्वासावस्तीदृशोमहामायावीह्वारकायामित्याह सोऽयमिति अस्यांभूम्याम् अभवायनाशाय ४७ तर्हिश्रीकृष्णोऽत्रास्तीत्यत्रैवास्थांमाकृथाइत्याह तच्चदेवानांकार्यंतेननिष्पादितम् केवलमवशेषंप्रतीक्षते यदुकुलक्षयमितिहृदिस्थम् ततोनिजंधामयास्यति ततोयूयमपिगच्छतेत्यर्थः तन्त्वप्नतमपिविदुरवदेवनावर्णयत् ४८ तदेवंशोकमास्थांचनिवार्यजिज्ञासवेतस्मैयथावृत्तंकथयतिधृतराष्ट्रइतिषड्भिः हिमवतोदक्षिणेभागे ४९ यावैप्रसिद्धास्वर्धुनीसाआत्मानंयत्रसप्तधाव्यधात् किमर्थम् नानापृथक्सप्तभिः स्रोतोभिःप्रवाहैः सप्तानामृषीणांप्रीतये अतएव तत्तीर्थंसप्तस्रोतोवदंति ५० तत्रतेनकृतमष्टांगयोगमाह स्नात्वेतिचतुर्भिः तत्रस्नानंहोमोऽब्भक्षणंचेतिनियमाउक्ताः भक्षस्थानेअपांस्वीकारादब्भक्षः उपशांतः आत्मायस्यसः विगताः पुत्रादिईषणायस्मादितिनियमाउक्ताः ५१ जितासनइत्यादिना आसनप्राणायामप्रत्याहाराउक्ताः हरिभावनयेतिधारणोक्ता ध्वस्ताः रजःसत्वतमोरूपामलायस्येतिफलतोध्यानमुक्तम् ५२ समाधिमाह विज्ञानेतिद्वाभ्याम् आत्मानमहंकारास्पदंस्थूलदेहाद्वियोज्य एकीकृत्य तंचविज्ञानात्मानंदृश्यांशाद्वियोज्यक्षेत्रज्ञेद्रष्टरिप्रविलाप्यतंचक्षेत्रज्ञंदृष्टंशाद्वियोज्यआधारेआश्रयसंज्ञेब्रह्मणिप्रविलाप्यघटांबरंघटोपाधेर्वियोज्य यथामहाकाशेप्रविलाप्यतेतद्वत् ५३

तदिदंभगवान्राजन्नेकआत्मात्मनांस्वदृक् अंतरोऽनंतरोभातिपश्यतंमाययोरुधा ४६ सोऽयमद्यमहाराजभगवान्भूतभावनः कालरूपोऽवतीर्णोऽस्यामभवायसुरद्विषाम् ४७ निष्पादितंदेवकृत्यमवशेषंप्रतीक्षते तावद्यूयमवेक्षध्वंभवेद्यावदिहेश्वरः ४८ धृतराष्ट्रःसहभ्रात्रागांधारीचस्वभार्यया दक्षिणेनहिमवतऋषीणामाश्रमंगतः ४९ स्रोतोभिःसप्तभिर्यावैस्वर्धुनीसप्तधाव्यधात् सप्तानांप्रीतयेनानासप्तस्रोतःप्रचक्षते ५० स्नात्वाऽनुसवनंतस्मिन्हुत्वाचाग्नीन्यथाविधि अब्भक्षउपशांतात्मासआस्तेविगतैषणः ५१ जितासनोजितश्वासःप्रत्याहृतषडिंद्रियः हरिभावनयाध्वस्तरजःसत्वतमोमलः ५२ विज्ञानात्मनिसंयोज्यक्षेत्रज्ञेप्रविलाप्यतम् ब्रह्मण्यात्मानमाधारेघटांबरमिवांबरे ५३

व्युत्थानाभावमाह ध्वस्तेति अंतर्गुणक्षोभाद्वा बहिरिंद्रियविक्षेपाद्वा व्युत्थानं भवेत् तदुभयं तस्य नास्ति यतो ध्वस्तो मायागुणा नामुदर्को उत्तरफलं वासनायस्य सः निरुद्धानि करणानि चक्षुरादीनि आशयो मनश्च यस्य सः अतएव निवर्त्तित अखिल आहारोऽभ्यो ग्यामिंद्रियैर्विषयाहरणं वा येन सः स्थाणुरिव निश्चल आस्ते तथाभूतमप्याने तु सुघटं प्रत्याह तस्येति अंतरायो विघ्नः मैवाभूरिस्य ड्डागमः छांदसः ५४ दर्शनमपि तावत् कुर्यामीत्यघटं प्रत्याह सवै अद्यतनाद्दिनात् स्वस्वाधीनम् तर्हि दाहार्थं गमिष्यामीत्याह तच्चेति ५५ तर्हि गांधार्यानयनाय गमिष्यामीत्याह पत्युर्देहे सहोटजे पर्णशालासहिते योगाग्निनासह गार्हपत्यादिभिर्दह्यमा

ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः निवर्त्तिताखिलाहार आस्ते स्थाणुरिवाचलः तस्यांतरायो मैवाभूः संन्यस्ताखिलकर्मणः ५४ सवा अद्यतनाद्राजन्परतः पंचमेऽहनि कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति ५५ दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे बहिः स्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति ५६ विदुरस्तु तदाश्चर्यं निशाम्य कुरुनंदन हर्षशोकयुतस्तस्माद्गंता तीर्थनिषेवकः ५७ इत्युक्त्वाऽथारुहत्स्वर्गं नारदः सहतुंबरुः युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ५८ इति श्रीभागवते महापुराणे प्रथमस्कंधे त्रयोदशोऽध्यायः १३ सूत उवाच संप्रस्थिते द्वारकायां जिष्णौ बंधुदिदृक्षया ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् १ व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्जुनः ददर्श घोररूपाणि निमित्तानि कुरूद्वहः २ कालस्य च गतिं रौद्रां विपर्यस्तर्तुधर्मिणः पापीयसीं नृणां वार्त्तां क्रोधलोभानृतात्मनाम् ३

ने तस्य पत्नी बहिः स्थिता सती तं पतिमन्वग्निं वेक्ष्यति प्रवेक्ष्यति ५६ तर्हि विदुरानयनार्थं गंतव्यमेव नेत्याह विदुरस्तु तन्निशाम्य दृष्ट्वा भ्रातुः सद्गत्या हर्षः तन्मृत्युना शोकश्च ताभ्यां युक्तः तस्मात्स्थानात्तीर्थानि सेवितुं गंता गमिष्यति ५७ शुचः शोकान् ५८ इति प्रथमे टीकायां त्रयोदशोऽध्यायः १३ चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशंकितः अशृणोदर्जुनात्कृष्णतिरोधानमितीर्यते १ श्रीकृष्णस्य चेति चकारेणाभिप्रायं च ज्ञातुम् १ कतिचित्सप्त तदाकालातिक्रमेऽपि ततः द्वारकातः नायात् नागतः निमित्तानि उत्पातान् कुरूद्वहो युधिष्ठिरः २ रौद्रां घोराम् तदेवाह विपर्यस्ता ऋतुधर्मा यस्मिन् तस्य वार्त्तां जीविकाम् क्रोधलोभानृतैर्युक्त आत्मा येषाम् ३ ६५ ६५

जिह्मप्रायंकपटबहुलंव्यवहृतंव्यवहारम् शाठ्यंवंचनंतस्मिन्मिश्रंसौहृदंसख्यम् पित्रादीनांप्रतियोगिभिः कल्कनंकलहादि ४ अत्यरिष्टानिअत्यंतमशुभानिदृष्ट्वानृणांलोभाद्यधर्मप्रकृतिंचदृष्ट्वा अनुजंभीमम् ५ ६ वेतिवितर्के कस्माद्धेतोर्नायातीत्य हंनवेद्मि ७ अपिकिम् यदाआत्मनः आक्रीडंक्रीडासाधनमंगंमनुष्यनाट्यमुत्स्रष्टुमिच्छतिसकालःप्राप्तः ८ अस्माकंसर्वपुरुषार्थत्वेहेतुः श्रीकृष्णः अतस्तद्वियोगंविनाऽनिष्टंनस्यादित्याशयेनाह यस्मात्श्रीकृष्णाद्धेतोः एतच्चोपरिष्टादर्जुनःस्पष्टीकरिष्य

जिह्मप्रायंव्यवहृतंशाठ्यमिश्रंचसौहृदम् पितृमातृसुहृद्भ्रातृदंपतीनांचकल्कनम् ४ निमित्तान्यत्यरिष्टानिकालेत्वनुगतेनृणाम् लोभाद्यधर्मप्रकृतिंदृष्ट्वोवाचानुजंनृपः ५ युधिष्ठिरउवाच संप्रेषितोद्वारकायांजिष्णुर्बंधुदिदृक्षया ज्ञातुंचपुण्यश्लोकस्य कृष्णस्यचविचेष्टितम् ६ गताःसप्ताधुनामासाभीमसेनतवानुजः नायातिकस्यवाहेतोर्नाहंवेदेदमंजसा ७ अपिदेवर्षिणादिष्टःसकालोयमुपस्थितः यदात्मनोऽगमाक्रीडंभगवानुत्सिसृक्षति ८ यस्मान्नःसंपदोराज्यंदाराःप्राणाःकुलंप्रजाः आसन्सपत्नविजयोलोकाश्चयदनुग्रहात् ९ पश्योत्पातान्नरव्याघ्रदिव्यान्भौमान्सदैहिकान् दारुणाञ्छंसतोदूराद्भयंनोबुद्धिमोहनम् १० ऊर्वक्षिबाहवोमह्यंस्फुरंत्यंगपुनःपुनः वेपथुश्चापिहृदयेआराद्दास्यंतिविप्रियम् ११ शिवैषोद्यंतमादित्यमभिरौत्यनलानना मामंगसारमेयोऽयमभिरौतिह्यभीरुवत् १२ शस्ताःकुर्वंतिमांसव्यंदक्षिणंपशवोपरे वाहांश्चपुरुषव्याघ्रलक्षयेरुदतोमम १३

ति लोकाश्चयज्ञकरणानुरूपायस्यानुग्रहात् ९ अदूरात्संनिहितंनोऽस्माकंआशंसतः उत्पातान् १० दैहिकानाह ऊर्वीति ऊर्वादयोवामाःस्फुरंति वेपथुः कंपश्चहृदयेवर्त्तते एतेमह्यमारात्संनिहितंविप्रियंदास्यंति ११ भौमानाहसार्द्धैस्त्रिभिः शिवाक्रोष्ट्री आदित्यमभिरौतिउद्यत्सूर्याभिमुखंक्रोशति अनलानना अग्निंमुखेनवमंती अंगहेभीममामभिलक्ष्यसारमेयःश्वाऽभिरौति प्लुतंभाषति अभीरुवत्निःशंकम् १२ शस्ताः गवादयोमांसव्यंवामंकुर्वंति अपरेगर्दभाद्याःप्रदक्षिणंकुर्वंति वाहान्अश्वान् १३ ६९

अयंकपोतोमृत्युदूतः मृत्युसूचकः उलूकोघूकः प्रत्युलूकस्तत्प्रतिपक्षोघूकः काकोवा कुह्वानैः कुत्सितशब्दैः विश्वंशून्यमि
च्छतः १४ धूम्राधूसरादिशः परिधयोऽग्निमिवलोकमावृण्वंति दिव्यानाहसाहाभ्याम् निर्घातोनिरभ्रवज्रपातः स्तनयित्नु
वोऽभ्रगर्जितानितैःसह १५ तमःविशेषेणसृजन् असृक्ररक्तम् १६ ग्रहाणांमर्दयुद्धम् भूतारुद्रानुचराः तेषांगणैः संकुलेर्व्या
मिश्रैः प्राणिभिःसहितैः रोदसी द्यावापृथिव्यौज्वलितेप्रदीप्तेइवचपश्येति १७ पुनर्भौमानाहनद्यइतिसार्द्धैःत्रिभिःप्राणिनां

मृत्युदूतः कपोतोयमुलूकःकंपयन्मनः प्रत्युलूकश्चकुह्वानैरनिद्रौशून्यमिच्छतः १४ धूम्रादिशःप
रिधयःकंपतेभूःसहाद्रिभिः निर्घातश्चमहानासीत्साकंचस्तनयित्नुभिः १५ वायुर्वातिखरस्पर्शोरजसा
विसृजंस्तमः असृग्वर्षंतिजलदाबीभत्समिवसर्वतः १६ सूर्यंहतप्रभंपश्यग्रहमर्दमिथोदिवि ससंकुलैं
भूतगणैर्ज्वलितेइवरोदसी १७ नद्योनदाश्चक्षुभिताःसरांसिचमनांसिच नज्वलत्यग्निराज्येनकालोऽयं
किंविधास्यति १८ नपिबंतिस्तनंवत्सानदुह्यंतिचमातरः रुदंत्यश्रुमुखागावोनहृष्यंत्यृषभाव्रजे १९ दैव
तानिरुदंतीवस्विद्यंतिह्युच्चलंतिच इमेजनपदाग्रामाःपुरोद्यानाकराश्रमाः भ्रष्टश्रियोनिरानंदाःकिमघंद
र्शयंतिनः २० मन्यएतैर्महोत्पातैर्नूनंभगवतःपदैः अनन्यपुरुषश्रीभिर्हीनाभूर्हतसौभगा २१ इतिचिंत
यतस्तस्यदृष्टारिष्टेनचेतसा राज्ञःप्रत्यागमद्ब्रह्मन्यदुपुर्याःकपिध्वजः २२ तंपादयोर्निपतितमयथापूर्व
मातुरम् अधोवदनमब्बिंदून्सृजंतंनयनाब्जयोः २३ विलोक्योद्विग्नहृदयोविच्छायमनुजंनृपः पृच्छ-
तिस्मसुहृन्मध्येसंस्मरन्नारदेरितम् २४ युधिष्ठिरउवाच कच्चिदानर्त्तपुर्य्यांनःस्वजनाःसुखमा
सते मधुभोजदशार्हार्हसात्त्वतांधकवृष्णयः २५

मनांसिच १८ दुह्यंतीतिकर्मकर्त्तर्यार्षम् नमस्नुवंतीत्यर्थः १९ दैवतानिप्र
तिमाः अघंदुःखम् २० एतैःकृत्वा नविद्यतेअन्येषुपुरुषेषुश्रीर्वज्रांकुशादिशोभायेषांतैःभगवतःपदैर्हीनाभूरित्यहंमन्ये २१ तस्य
राज्ञः इतिएवंदृष्टान्यरिष्टानियेनतेनचेतसाचिंतयतःसतः २२ अयथापूर्वंनिपतितम् तदेवाहआतुरमित्यादि अपांबिंदून्अश्रूणि
नेत्राभ्यांविसृजंतमित्यर्थः २३ उद्विग्नंकंपितंहृदयंयस्यसः विच्छायंविगतकांतिम् २४ स्वजनाःबांधवाः २५ ६३ ६३

किंवक्ष्यतीतिशंकयाव्यवहितक्रमेणपृच्छति शूरइत्यादिना मारिषःमान्योमातामहः आनकदुंदुभिर्वसुदेवः २६ स्वसारःपरस्परम् वसुदेवक्षेमेनतासामपिक्षेमंपृष्टमेव तथाऽपिपृथक्पृच्छति स्वयमिति २७ आहुकःउग्रसेनः असत्पुत्रोयस्यअतएवजीवनमात्रमेवपृष्टम् अनुजश्चदेवकः हृदीकसुतःकृतवर्मा जयंतादयःकृष्णभ्रातरः २८ २९ सर्ववृष्णीनांमध्येमहारथः गंभीररयःयुद्धेमहावेगः वर्द्धतेमोदतइत्यर्थः ३० कृष्णस्यापत्यानिकार्ष्णयः तेषुप्रवराः ३१ सुनंदनंदौशीर्षण्यौमुख्यौयेषांते ३२ भगवतिस्व

शूरोमातामहः कच्चिदास्तेस्वस्त्यथवाऽथमारिषः मातुलःसानुजःकच्चित्कुशल्यानकदुंदुभिः २६ सप्तस्वसारस्तत्पत्न्योमातुलान्यःसहात्मजाः आसतेसस्नुषाःक्षेमंदेवकीप्रमुखाःस्वयम् २७ कच्चिद्राजाहुकोजीवत्यसत्पुत्रोऽस्यचानुजः हृदीकःससुतोऽक्रूरोजयंतगदसारणाः २८ आसतेकुशलंकच्चिद्येचशत्रुजिदादयः कच्चिदास्तेसुखंरामोभगवान्सात्वतांप्रभुः २९ प्रद्युम्नःसर्ववृष्णीनांसुखमास्तेमहारथः गंभीररयोऽनिरुद्धोवर्द्धतेभगवानुत ३० सुषेणश्चारुदेष्णश्चसांबोजांबवतीसुतः अन्येचकार्ष्णिप्रवराःसपुत्राऋषभादयः ३१ तथैवानुचराःशौरेःश्रुतदेवोद्धवादयः सुनंदनंदशीर्षण्यायेचान्येसात्वतर्षभाः ३२ अपिस्वस्त्यासतेसर्वेरामकृष्णभुजाश्रयाः अपिस्मरंतिकुशलमस्माकंबद्धसौहृदाः ३३ भगवानपिगोविंदोब्रह्मण्योभक्तवत्सलः कच्चित्पुरेसुधर्मायांसुखमास्तेसुहृद्वृतः ३४ मंगलायचलोकानांक्षेमायचभवायच आस्तेयदुकुलांभोधावाद्योऽनंतसखःपुमान् ३५ यद्बाहुदंडगुप्तायांस्वपुर्यांयदवोऽर्चिताः क्रीडंतिपरमानंदंमहापौरुषिकाइव ३६ यत्पादशुश्रूषणमुख्यकर्मणासत्यादयोद्व्यष्टसहस्रयोषितः निर्जित्यसंख्येत्रिदशांस्तदाशिषोहरंतिवज्रायुधवल्लभोचिताः ३७

खमास्तइतिप्रश्नस्यानौचित्यमाशंक्याह पुरइत्यादि ३४ भगवतोऽवस्थानेहिलोकानांमंगलंनान्यथेत्याशयेनाहचतुर्भिः मंगलायशुभाय क्षेमायलब्धपालनाय भवायउद्भवाय अनंतसखःबलभद्रसहायः ३५ अर्चिताःसर्वपूजिताःपरमानंदंयथाभवतितथा महापौरुषिकाः वैकुंठनाथानुचराः ३६ यस्यपादशुश्रूषणमेवमुख्यंतपआदिभ्यःश्रेष्ठंयत्कर्मतेनसत्यभामादयः संख्येयुद्धेश्रीकृष्णबलेननिर्जित्यतदाशिषः देवभोग्यान्पारिजातादीन् वज्रायुधस्यवल्लभाशचीतस्याःउचिताः ३७ छ छ छ छ

यद्वाहु दंडप्रभावोपजीविनः सधर्मोमंघ्रिभिरधिक्रामंतिसगोविंदः सखमास्तेइतिमत पंचमश्लोकेनान्वयः ३८ इदानींतस्यैवकुशलं पृच्छति कच्चिदितिषड्भिः अनामयमारोग्यम् नलब्धोमानोयेन बंधुभ्यः सकाशात् किंवातैःप्रत्युत अवज्ञातः तिरस्कृतः यतश्चिरोषितः बहुकालंतत्रस्थितः ३९ अभावैरितिच्छेदः प्रेमशून्यैः अमंगलैः परुषैः शब्दादिभिर्नाभिहतः नताडितोऽसिकिम् यद्वा अर्थिभ्यः किमपिदास्यामीतिनोक्तंकिम् यद्वा आशयासहयया आशाभवतितयादास्यामीतिप्रतिश्रुतंसत्नदत्तंकिम् ४० अन्यद्वाशरणागतंसंप्राप्तिमात्रंनत्यक्तवानसिकिम् यतस्त्वंपूर्वंशरणप्रदः आश्रयप्रदः ४१ अगम्यामितिच्छेदः नर्निदितांस्त्रियमगमः किंनगतवानसि अ

यद्वाहु दंडाप्युदयानुजीविनोयदुप्रवीराह्यकुतोभयासुहुः अधिक्रमंत्यंघ्रिभिराहृतांबलात्सभांसधर्मां सुरसत्तमोचिताम् ३८ कच्चित्तेऽनामयंतातभ्रष्टतेजाविभासिमे अलब्धमानोऽवज्ञातः किंवातातचिरोषितः ३९ कच्चिन्नाभिहतोभावैःशब्दादिभिरमंगलैः नदत्तमुक्तमर्थिभ्यआशयायत्प्रतिश्रुतम् ४० कच्चित्त्वंब्राह्मणंबालंगांवृद्धंरोगिणंस्त्रियम् शरणोपसृतंसत्वंनात्याक्षीःशरणप्रदः ४१ कच्चित्त्वंनागमोऽगम्यांगम्यांवासत्कृतांस्त्रियम् पराजितोवाऽथभवान्नोत्तमैर्नासमैःपथि ४२ अपिस्वित्पर्यभुंक्थास्त्वंसंभोज्यान्वृद्धबालकान् जुगुप्सितंकर्मकिंचित्कृतवान्नयदक्षमम् ४३ कच्चित्प्रेष्ठतमेनाथहृदयेनात्मबंधुना शून्योऽस्मिरहितोनित्यंमन्यसेतेऽन्यथानरुक् ४४ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेयुधिष्ठिरवितर्कोनामचतुर्दशोऽध्यायः १४ सूतउवाच एवंकृष्णसखःकृष्णोभ्रात्राराज्ञाविकल्पितः नानाशंकास्पदंरूपंकृष्णविश्लेषकर्शितः १

सत्कृतांमलिनवस्त्रादिनानागमःकिम् नोत्तमैः अनुत्तमैःसमैरित्यर्थः असमैरधमैर्वाकिंनपराजितोऽसीत्यर्थः ४२ संभोजनार्हान्वृद्धान्बालकांश्चकिंस्वित्पर्यभुंक्थाः त्यक्त्वाभुक्तवानसिकिम् अक्षमंकर्तुमयोग्यंयत्तन्नकृतवानसिकिम् ४३ नित्यंसदाप्रेष्ठतमेनहृदयेनांतरंगेणस्वबंधुनाश्रीकृष्णेनरहितःशून्योऽस्मीतिमन्यसे अन्यथातेरुक्मनःपीडानघटेत ४४ इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेटीकायांचतुर्दशोऽध्यायः १४ कलिप्रवेशमालक्ष्यधुरंन्यस्यपरीक्षिति आरुरोहनृपःस्वर्गमितिपंचदशोऽब्रवीत् १ कृष्णोऽर्जुनः अविकल्पितइतिच्छेदः नानाशंकास्पदंरूपमालक्ष्यविकल्पितइत्यर्थः प्रतिभाषितुंनाशक्नोदित्युत्तरेणान्वयः तत्रहेतवः कृष्णविश्लेषेणकर्शितः कृशःकृतः १ ७. ७. ७.

शोकेन हेतुना वदनं च हृच्चतएव सरोजे शुष्यती वदनसरोजे यस्य सः हता प्रभा तेजो यस्य सः २ शुचः शोकाश्रूणि यान्युद्गच्छंति तानि नेत्रयोरेव संस्तभ्य गलितानि च पाणिना आमृज्य परोक्षेण दर्शनागोचरेण श्रीकृष्णेन हेतुना समुन्नद्धमधिकं यत्प्रेमौत्कंठ्यं तेन कातरः व्याकुलः नृपमित्याहेत्युत्तरेणान्वयः ३ सख्यं हितैषिताम् मैत्रीमुपकारिताम् सौहृदं संबंधितां च बाष्पेण कंठावरोधात् गद्गदया ४ येन मां वंचयता देवान्विस्मापयति यत् ५ यस्य क्षणवियोगेनेत्यादि यच्छब्दानां तेनाहमद्य मुषित इति सप्तमश्लोकस्थेन तच्छब्देन संबंधः प्रियस्याप्यप्रियत्वे दृष्टांतः उक्थेन प्राणेन एष पित्रादिः ६ श्रीकृष्णोपकाराननुस्मरति यत्संश्रयादिति दशभिः यस्य संश्र

शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः विभुं तमेवानुस्मरन्नाशक्नोत्प्रतिभाषितुम् २ कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः परोक्षेण समुन्नद्धप्रणयौत्कंठ्यकातरः ३ सख्यं मैत्रीं सौहृदं च सारथ्यादिषु संस्मरन् नृपमग्रजमित्याह बाष्पगद्गदया गिरा ४ अर्जुन उवाच वंचितोऽहं महाराज हरिणा बंधुरूपिणा येन मेऽपहृतं तेजो देवविस्मापनं महत् ५ यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ६ यत्संश्रयाद्द्रुपदगेहमुपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् तेजो हृतं खलु मयाऽभिहतश्च मत्स्यः सज्जीकृतेन धनुषाऽधिगता च कृष्णा ७ यत्सन्निधावहमु खांडवमग्नयेऽदामिंद्रं च सामरगणं तरसा विजित्य लब्धा सभा मयकृताऽद्भुतशिल्पमाया दिग्भ्योऽहरन्नृपतयो बलिमध्वरे ते ८ यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थे आर्योऽनुजस्तव गजायुतसत्त्ववीर्यः तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन्बलिमध्वरे ते ९

यात् बलात् स्मरेण कामेन दुर्मदानामतिमत्तानां तेजः प्रभावः हृतं धनुर्ग्रहणेनैव पश्चात्तद्धनुः सज्जीकृतं च तेन च मत्स्यो यंत्रोपरि भ्रमन् विद्धः ततस्तान्निर्जित्य द्रौपदी प्राप्ता च ७ उ इति विस्मये खांडवमिंद्रस्य वनम् अदां दत्तवानस्मि खांडवदाहे रक्षितेन मयेन कृता च सभा लब्धा अद्भुतशिल्परूपा माया यस्यां सा ते अध्वरे यागे राजसूये ८ अनंतरश्लोको विगीतस्तथाऽपि व्याख्यायते नृपशिरः स्वंघ्रिर्यस्य तं जरासंधं तवानुजो भीमः मखार्थमहन् हतवान् तन्निर्जयं विना राजसूयमखानुपपत्तेः गजायुतस्येव सत्त्वमुत्साहशक्तिर्वीर्यं बलं च यस्य सः तं हत्वा प्रमथनाथो महाभैरवः तस्य मखाय ये राजानस्तेनाहृताः ते च यद्यस्मान्मोचिताः तत्तस्मात्तेऽध्वरे बलिमानीतवंतः ९ ७ ७ ७ ७

यैः कितवैः दुःशासनादिभिः तव पत्न्याः कबरं विकीर्य उन्मुच्य स्पृष्टमाकृष्टम् तेषां स्त्रियो हतेशाः अत एव वैधव्यात् हि मुक्तकेशा अकृत चकार कथंभूतं कबरम् अधिमखं राजसूयमधिकृत्य कृतोऽरचितो यो महाभिषेकः तेन श्लाघ्यतमं चारु रम्यम् यत्स्मरणात्तदानीमेव प्रातस्य श्रीकृष्णास्य नमने पादयोः पतितान्यश्रूणि मुखात् यस्याः पत्न्याः पदशब्दसापेक्षस्यापि पतितशब्दस्याश्रुपदेन समासो नित्यसापेक्षितत्वात् १० शिष्याणामयुतस्याग्रे तत्संक्तौ भंक्ते यः तस्मा दुर्वाससो हेतोः अरिणा रचितं यत् दुरंतं कृच्छ्रं शापलक्षणं तस्मात् सकाशान्नोऽस्मान् वने एत्य जुगोप किंकृत्वा शाकमेवान्नं तस्मिन्नेव पात्रेऽवशिष्टमुपयुज्य जग्ध्वा यत उपयोगात्सलिले विनिमग्नो मुनीनां संघः त्रिलोकीं तृप्तामममंस्त एवं हि भारते कथा कदाचिद्दुर्वाससो दुर्योधनेनातिथ्यं कृतम् तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते दुर्वाससः शापात्पांडवा नश्येयुरिति मनसि विधाय दुर्योधनेनोक्तम् युधिष्ठिरोऽस्मत्कुलमुख्योऽतस्तस्यापि भवतैवमेव शिष्यायुतसहितेनातिथिना

पत्न्यास्तवाधिमखकृतमहाभिषेकश्लाघिष्टचारुकबरं कितवैः सभायाम् स्पृष्टं विकीर्य पदयोः पतिताश्रुमुख्या यस्तत्स्त्रियोऽकृत हतेशविमुक्तकेशाः १० योनोऽजुगोपवनमेत्य दुरंतकृच्छ्राद्दुर्वाससोऽरिविहितादयुताग्रभुग्यः शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं तृप्तामममंस्त सलिले विनिमग्नसंघः ११ यत्तेजसाऽथ भगवान्युधि शूलपाणिर्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेंद्रभवने महदासनार्द्धम् १२

भवितव्यम् किंतु द्रौपदी यथाक्षुधानसीदेत्तथा तस्यां भुक्तवत्यां तद्गृहं गंतव्यमिति ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्यान्हिकं कृत्वा आगम्यतामिति विज्ञापितो मुनिसंघोऽघमर्षणाय जले निममज्ज तत्र चिंतातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णस्तत्क्षणमेव भक्तवात्सल्यतयाचागतः तया चावेदिते वृत्तांते भगवतोक्तम् हे द्रौपदि अहं च बुभुक्षितोऽस्मि प्रथमं मां भोजयेति तया चातिलज्जयोक्तम् स्वामिन् मद्भोजनपर्यंतमक्षयमप्यन्नं सूर्यदत्तस्थाल्यां मया च सर्वान् संभोज्य भुक्तम् अतो नास्त्यन्नमिति तथाऽप्यतिनिर्बंधेन स्थालीमानाय्य तत्कंठलग्नं किंचित् शाकान्नं प्राश्योक्तम् अनेन विश्वात्मा भगवान्प्रीयताम् अथ भोक्तुं मुनिसंघमाकारयेति स च तावताऽतितृप्तो वृथा पाकभयेन पलायित इति ११ गिरिजासहितो विस्मापितः सन्निजं पाशुपतमस्त्रम् अन्येऽपि लोकपाला निजान्यस्त्राणि अदुः अन्यदप्याश्चर्यमाह असुनेति महत इंद्रस्यासनार्द्धम् १२ ६९ ६९ ६९

तत्रैव स्वर्गे क्रीडतः गांडीवलक्षणं चिन्हं यस्य तत् अरातयो निवातकवचादैत्याः तेषां वधार्थमाश्रितवंतः येनानुभावितं प्रभावयुक्तं कृतम् हे आजमीढ युधिष्ठिर तेन मुषितः वंचितोऽस्मि कथंभूतेन भूम्ना निजमहिमावस्थानेन १३ यद्बांधव इत्यादि श्लोकत्रयस्यापि तेन मुषितोऽहमिति पूर्वेणैव संबंधः श्रीकृष्णा बांधव एवाहं कौरवसैन्याब्धिम् नास्त्यंतो गांभीर्येण पारं च देशतो यस्य तम् ततरे तीर्णवान् उत्तरगोग्रहे अतीर्याणि दुस्तराणि सत्त्वानि तिमिंगिलादीनि भीष्मादिरूपाणि यस्मिन् परैर्नीतं गोधनं प्रत्याहृतम् परेषां च शिरोभ्यः सकाशात् तेजस्पदं प्रभावस्थास्पदमुष्णीषरूपम् मणिमयं मुकुटरत्नरूपं च बहुधनं तान्मोहनास्त्रेण मोहयित्वाहृतम् यद्बांधवेन मया १४ अद्भ्रा अनल्पा ये राजन्यवर्याः तेषां रथमंडलैर्मंडिताः कृष्णभीष्मादीनां च मृत्युसारथिरूपेण ममाग्रेचरः सन् हे विभो तेषां रथयूथपानामायुरादी

तत्रैवमे विहरतो भुजदंडयुग्मं गांडीवलक्षणमरातिवधाय देवाः सेंद्राः श्रिता यदनुभावितमाजमीढ तेनाहमद्य मुषितः पुरुषेण भूम्ना १३ यद्बांधवः कुरुबलाब्धिमनंतपारमेको रथेन ततरेऽहमतीर्यसत्त्वम् प्रत्याहृतं बहुधनं च मया परेषां तेजस्पदं मणिमयं च हृतं शिरोभ्यः १४ यो भीष्मकर्णगुरुशल्यचमूष्वदभ्रराजन्यवर्यरथमंडलमंडितासु अग्रेचरो मम विभो रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत् १५ यद्दोःषु मा प्रणिहितं गुरुभीष्मकर्णद्रौणित्रिगर्त्तशलसैंधवबाल्हिकाद्यैः अस्त्राण्यमोघमहिमानि निरूपितानि नोपस्पृशुर्नृहरिदासमिवासुराणि १६ सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे यत्पादपद्ममभवाय भजंति भव्याः मां श्रांतवाहमरयो रथिनो भुविष्ठं न प्राहरन्यदनुभावनिरस्तचित्ताः १७ नियो दृशा दृष्ट्यैव आर्च्छत् हृतवान् मनांसी कृत्सहादिशक्तिम् सहो बलं ओजः शस्त्रादिकौशलम् १५ यस्य दोःषु भुजेषु मा मां प्रणिहितं स्थापितं तेनैव गुर्वादिभिर्निरूपितानि प्रयुक्तान्यस्त्राणि न स्पृशंति स्म गुरुर्द्रोणः त्रिगर्त्तः त्रिगर्त्तदेशाधिपतिः सुशर्मा शलः शल्यः सैंधवः सिंधुदेशाधिपतिर्जयद्रथः बाल्हिकः शंतनोर्भ्राता अमोघो महिमा येषां तथाभूतान्यपि पाठांतरेऽपि स एवार्थः प्रतीकाराकरणेऽप्यस्पर्शे दृष्टांतः नृहरिदासं प्रह्लादमिवेति १६ स्वापराधमनुस्मरन् संतप्यमान आह सौत्ये सारथ्ये कुमतिना मे मया स वृतः कुमतित्वमेवाह आत्मद इत्यादिना अभवाय मोक्षाय भव्याः श्रेष्ठाः श्रांता वाहा अश्वा यस्य तं मां जयद्रथवधे हि जलपानं विनाऽश्वाः श्रांताः ततो रथादवतीर्य बाणैर्भुवं भित्वा जलं संपादितम् तदा यस्यानुभावेन निरस्तचित्ता अरयो मां न प्रहृतवंतः स सौत्ये वृत इति कुमतित्वम् १७

हेनरदेव उदारंगंभीरंरुचिरंचयत्स्मितंतेनशोभितानिनर्माणिपरिहासवाक्यानि तथाकार्यप्रस्तावेषुहेपार्थेत्यादीनिमधुराक्षराणिसं
जल्पितानिचहृदिस्पृशानिमनोज्ञानिमाधवस्ययान्येतानितानीदानींस्मर्तुर्ममहृदयंलुठंति लोठयंतिक्षोभयंति णिजभावआर्षः १८
विकत्थनंस्वगुणश्लाघनम् शय्यादिषुऐक्यात् अव्यतिरेकाद्धेतोः कदाचिद्व्यभिचारंदृष्ट्वाहेवयस्यकृतवान्सत्ययुक्तस्त्वमितिव-
क्रोक्त्याविप्रलब्धस्तिरस्कृतोऽपि ऋभ्रमानितिपाठेऋभवोदेवाः सेवकाःसंतियस्यसः असौमहानपिमयावयस्यइतिमत्वाविप्रलब्धः
तिरस्कृतइत्यर्थः ऋतवानितिपाठेवत्त्वभावआर्षः मेअघमपराधमसहत महितयामहत्वेन एकपदेअतिमहत्वेनेत्यर्थः सख्युरघंस

नर्माण्युदाररुचिरस्मितशोभितानिहेपार्थहेऽर्जुनसखेकुरुनंदनेति संजल्पितानिनरदेवहृदिस्पृशा
निस्मर्तुर्लुठंतिहृदयंममभाधवस्य १८ शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्यकृतवानितिवि
प्रलब्धः सख्युःसखेवपितृवत्तनयस्यसर्वंसेहेमहान्महितयाकुमतेरघंमे १९ सोऽहंनृपेंद्ररहितःपु
रुषोत्तमेनसख्याप्रियेणसुहृदाहृदयेनशून्यः अध्वन्युरुक्रमपरिग्रहमंगरक्षन्गोपैरसद्भिरबलेवविनि
र्जितोऽस्मि २० तद्वैधनुस्तइषवःसरथोहयास्तेसोऽहंरथीनृपतयोयतआनमंति सर्वंक्षणेनतदभूद
सदीशरिक्तंभस्मन्हुतंकुहकराद्धमिवोप्तमूष्याम् २१ राजंस्त्वयाऽभिपृष्टानांसुहृदांनःसुहृत्पुरे विप्र
शापविमूढानांनिघ्नतांमुष्टिभिर्मिथः २२ वारुणींमदिरांपीत्वामदोन्मथितचेतसाम् अजानतामिवान्यो
ऽन्यंचतुःपंचावशेषिताः २३

रेवं तनयस्याघंपितेव १९ त्वयाशंकितंपराजयंचापिप्राप्तोऽहमित्याह तेनस-
ख्यारहितः अतोहृदयेनअस्यहृदयेनवाशून्यः अंगहेराजन् उरुक्रमस्यपरिग्रहंषोडशसहस्रस्त्रीलक्षणम् असद्भिर्नीचैः अब
लायोषेव २० श्रीकृष्णवियोगएवात्रहेतुर्नान्यइत्याह तदिति यतःयेभ्यः ईशेनरिक्तंशून्यमसत्कार्याक्षमम् सन्मंत्रविधानैरपिभ
स्मनिहुतमिव अतिप्रीतादपिकुहकात् मायाविनःसकाशाद्राद्धंलब्धंयथाअसत् सम्यक्कर्षणादिनाप्यूषरभूमौउप्तंबीजमिव २१ सु
हृत्पुरेत्वयापृष्टानांनःसुहृदांमध्येचत्वारःपंचवाऽवशेषिताः तत्रहेतुः विप्रशापेत्यादि २२ वारुणीमन्नमयीम् अजानतामिवान्यो
ऽन्यमेरकामुष्टिभिर्निघ्नताम् २३ ७ ७ ७ ७ ७

अवशोषिताइत्यनेनोक्तंहेतुकर्त्तारमाहत्रिभिः प्रायेणेति भावयंतिपालयंति २४ जलौकसांमत्स्यादीनांमध्येमहांतः स्थूलाः अणीयसः सूक्ष्मान्यथाभक्षयंति २५ एवंबलिष्ठैर्महद्भिः पांडवैर्दुर्योधनजरासंधादीन्निहत्ययदून्यदुभिरन्योऽन्यंनिहत्यभगवान् भुवोभारम्भूतान्संहृतवान् २६ अतःपरंवक्तुंनशक्नोमीतिसूचयन्नाह देशकालोचितार्थयुक्तानि मनः पीडोपशमकराणिचगोविंदस्यवचनानि स्मरतोमेममचित्तंहरंति आकर्षंति २७ एवमितिसूतोक्तिः अतिदृढेनस्नेहेनचिंतयतोमतिःशांताविशोका विमलाविरक्ताचासीत् २८ मतिवैमल्यफलमाह वासुदेवांघ्र्यनुध्यानेनपरिबृंहितंरंहोवेगोयस्याः तयानिर्मथिताउन्मूलिताअशेषाः कषायाः कामादयोयस्याःसा

प्रायेणैतद्भगवतईश्वरस्यविचेष्टितम् मिथोनिघ्नंतिभूतानिभावयंतिचयन्मिथः २४ जलौकसांजलेयद्वन्महांतोदत्यणीयसः दुर्बलान्बलिनोराजन्महांतोबलिनोमिथः २५ एवंबलिष्ठैर्यदुभिर्महद्भिरितरान्विभुः यदून्यदुभिरन्योऽन्यंभूभारान्संजहारह २६ देशकालार्थयुक्तानिहृत्तापोपशमानिच हरंतिस्मरतश्चित्तंगोविंदाभिहितानिमे २७ एवंचिंतयतोजिष्णोःकृष्णपादसरोरुहम् सौहार्देनातिगाढेनशांतासीद्विमलामतिः २८ वासुदेवांघ्र्यनुध्यानपरिबृंहितरंहसा भक्त्यानिर्मथिताशेषकषायधिषणोऽर्जुनः २९ गीतंभगवताज्ञानंयत्तत्संग्राममूर्द्धनि कालकर्मतमोरुद्धंपुनरध्यगमत्प्रभुः ३० विशोकोब्रह्मसंपत्त्यासंछिन्नद्वैतसंशयः लीनप्रकृतिनैर्गुण्यादलिंगत्वादसंभवः ३१ निशम्यभगवन्मार्गंसंस्थांयदुकुलस्यच स्वःपथायमतिंचक्रेनिभृतात्मायुधिष्ठिरः ३२

धिषणाबुद्धिर्यस्यसः ज्ञानंपुनरध्यगमदित्युत्तरेणान्वयः २९ कालेनकर्मभिः तमसाभोगाभिनिवेशेनचरुद्धमावृतंसत् ३० ज्ञानफलमाह विशोकइति एतदेवशोकहेतुत्वभावेनोपपादयति शोकस्यहिहेतुर्द्वैतभ्रमः तस्यदेहः तस्यलिंगम् तस्यगुणाः तेषामविद्यातत्रब्रह्मसंपत्त्याब्रह्माहमितिज्ञानेनलीनाप्रकृतिरविद्यायस्मिन् तन्नैर्गुण्यंभवति नतुसुषुप्तिप्रलययोरिवाविद्याशेषम् तस्मान्नैर्गुण्याद्गुणकार्यलिंगनाशः अलिंगत्वाच्चअसंभवः सम्यग्भोगायभवतिपुनःपुनरितिसंभवःस्थूलदेहः तद्रहितः ततश्चतत्परिच्छेदाभावात्संछिन्नोद्वैतलक्षणःसंशयोभ्रमोयस्यसविशोकःजातइति ३१ भगवतोमार्गंमालक्ष्ययदुकुलस्यसंस्थांनाशंश्रुत्वा नारदोक्तंचानुस्मृत्यस्वः पथायस्वर्गमार्गायनिभृतात्मानिश्चलचित्तः ३२ ७ ७ ७

तां दुर्विज्ञेयाम् वक्ष्यति हि सौदामन्या यथाकाशे यांत्या हित्वाऽभ्रमंडलम् गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैरिति संसृतेरुपरराम जीवन्मुक्ता बभूव देहं जहाविति वा ३३ तदेवमुक्तमपि यादवेभ्यो भगवतो वैलक्षण्यमबुध्वा तत्साम्यं वदतो मंदमतीन् प्रति वैलक्षण्यं स्पष्टयति द्वाभ्याम् ययायादवरूपया तन्वा भुवो भारं कंटकेन कंटकमिवाहरत् यादवतनुः भूभारतनुश्चेति द्वयमपीश्वरस्य संहार्यत्वेन सममेव ३४ श्रीकृष्णमूर्त्तेर्विशेषमाह यथेति तान्यपि यथा धत्ते जहाति च तदाह यथा नटो निजरूपेण स्थितो रूपांतराणि धत्ते ऽतर्धत्ते च तथा तदपि कलेवरं जहौ अंतरधादित्यर्थः ३५ युधिष्ठिरस्य स्वर्गारोहप्रसंगाय कलिप्रवेशमाह स्वतन्वा जहौ स तनोरेव वैकुंठारोहात् श्रवणार्हा सती

पृथाऽप्यनुश्रुत्य धनंजयोदितं नाशं यदूनां भगवद्गतिं च ताम् एकांतभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृतेः ३३ ययाऽहरद्भुवो भारं तां तनुं विजहावजः कंटकं कंटकेनेव द्वयं चापीशितुः समम् ३४ यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः भूभारः क्षपितो येन जहौ तच्च कलेवरम् ३५ यदा मुकुंदो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः तदाहरेवाप्रतिबुद्धचेतसामधर्महेतुः कलिरन्ववर्त्तत ३६ युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तदात्मनि विभाव्य लोभानृतजिह्महिंसनाद्यधर्मचक्रं गमनाय पर्यधात् ३७ स्वराट् पौत्रं विनयिनमात्मनः सुसमं गुणैः तोयनीव्याः पतिं भूमेरभ्यषिंचद्गजाह्वये ३८ मथुरायां तथा वज्रं शूरसेनपतिं ततः प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ३९ विसृज्य तत्र तत्सर्वं दुकूलवलयादिकम् निर्ममो निरहंकारः संछिन्नाशेषबंधनः ४०

कथा यस्य तदाय दहस्तस्मिन्नेव अहरिति लुप्तसप्तम्यंतं पदम् अप्रतिबुद्धचेतसामिति विवेकिनां तु न प्रभुरित्युक्तम् अन्ववर्त्ततेति पूर्वमेवांशेन प्रविष्टस्य तेन रूपेणानुवृत्तिरुक्ता ३६ बुधो युधिष्ठिरः तस्य कलेः परिसर्पणं प्रसरणं विलोक्य कथंभूतम् लोभाद्यधर्मचक्रं यस्मिन् जिह्मं कौटिल्यम् पर्यधात् तदुचितं परिधानमकरोत् ३७ आत्मनः स्वस्य गुणैः सुसममतिसदृशम् तोयं सर्वतः स्थितं समुद्रोदकमेव नीवी परिधानविशेषो यस्याः तस्या भूमेः पतित्वेनाभिषिक्तवान् ३८ वज्रमनिरुद्धस्य पुत्रम् निरूप्य कृत्वेत्यर्थः अपिबत् आत्मन्यारोपयामास ईश्वरः समर्थः ३९ संछिन्नान्यशेषाणि बंधनानि उपाधयो येन ४०

६ ६ ६ ६ ६

तदेव दर्शयति द्वाभ्याम् वाचमित्युपलक्षणम् सर्वेंद्रियाणि मनसि प्रविलापितवानित्यर्थः तच्च मनः प्राणे प्राणाधीनवृत्तित्वात् तं च प्राण मितरे अपाने तेनाकर्षणात् अपानव्यापार उत्सर्गः तत्सहितमपानं मृत्यौ तदधिष्ठातृदेवतायाम् अनेनैव वागादिष्वपि तत्तत्कर्मसाहित्यं ज्ञेयम् तं मृत्युं पंचत्वे पंचभूतानामैक्ये देहे देहस्यैव मृत्युकर्तृत्वात्मन इति भावितवानित्यर्थः अजोहवीदिति यङ्लुगंतात्लुङि रूपम् ४१ त्रि त्वे गुणत्रये तच्च त्रित्वमेकत्वे अविद्यायाम् सर्वसंसारोपहेतुमविद्यामात्मनि जीवे अजोहवीदिति वक्तव्ये अजुहवीदित्यार्षम् एवं शोधित मात्मानं ब्रह्मणि अव्यये कूटस्थे न तस्यान्यत्र लय इत्यर्थः ४२ तदेवमात्मप्रतिपत्तिमुक्त्वा बाह्यस्थितिमाह चीरवासा इति द्वाभ्याम् बद्ध

वाचं जुहाव मनसि तत्प्राण इतरे च तम् मृत्यावपानं सोत्सर्गं तं पंचत्वे ह्यजोहवीत् ४१ त्रित्वे हुत्वाऽथ पंचत्वं तं चैकत्वेऽजुहोन्मुनिः सर्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ४२ चीरवासा निराहारो बद्धवाङ्मुक्तमूर्द्धजः दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ४३ अनवेक्षमाणो निरगादशृण्वन्बधिरो यथा उदीचीं प्रविवेशा शां गतपूर्वां महात्मभिः ४४ हृदि ब्रह्म परं ध्यायन्नावर्त्तेत यतो गतः सर्वे तमनु निर्जग्मुर्भ्रातरः कृतनिश्चयाः कलिनाधर्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ४५ ते साधुकृतसर्वार्था ज्ञात्वात्यंतिकमात्मनः मनसा धारयामा सुर्वैकुंठचरणांबुजम् ४६ तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे तस्मिन्नारायणपदे एकांतमतयो गतिम् ४७ अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः विधूतकल्मषा स्थानं विरजेनात्मनैव हि ४८ विदुरोपि परित्यज्य प्रभासे देहमात्मवान् कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ४९

वाक् मौनी ४३ अनवेक्षमाणः अनुजा दिमतीक्षामकुर्वन् आशां दिशम् गतपूर्वां पूर्वं प्रविष्टाम् यतः यां दिशम् ४४ अधर्मो मित्रं यस्य तेन ४५ साधुकृताः सर्वे अर्था धर्मा दयो यैः अत एव वैकुंठस्य चरणांबुजमेव आत्यंतिकं शरणं ज्ञात्वा ४६ तदिति ४७ कथंभूते पदे विधूतकल्मषाणामास्थानं निवास स्थानं यत् तस्मिन् विरजेनात्मनैव गतिमापुः न तु षोडशकलेन लिंगेन गते वा विशेषणम् विरजेनात्मनैवावस्थानरूपां गतिम् ते विधूतक ल्मषाः प्रापुरिति ४८ तीर्थान्यटन् प्रभासे श्रीकृष्णावेशेन कृष्णे चित्तमावेश्य देहं परित्यज्य तच्चित्त एव सन् तदानीं तु मागतैः पितृभिः सह स्वक्षयं स्वाधिकारस्थानं ययौ ४९

आत्मानंमतिअनपेक्षतांतदाज्ञात्वातमाप ५० इतिएवंयत्संप्रयाणम् अलमतिशयेनस्वस्त्ययनंमंगलास्पदम् अलंपवित्रंच ५१ इति
प्रथमेटीकायांपंचदशोऽध्यायः १५ ततश्चषोडशेभूमिधर्मयोःकलिखिन्नयोः संवादेवपर्यंतेशास्तिःपालकस्यपरीक्षितः १ द्विजवर्या
णांशिक्षया सूतांजन्मनि अभिजातकोविदाःजातकर्मविदः हेविप्र महतांगुणायस्मिन्सः १ जनमेजयादीनित्यत्राक्षराधिक्यंछांद
सम् हेतौशतृप्रत्ययः सुतानुत्पादयितुमिरावतीमुपयेमइतिवाक्ययोजना २ आजहारकृतवानित्यर्थः शारद्वतंकृपम् यत्रयेषुअश्व
मेधेषु ३ निजग्राहनिगृहीतवान् कलिमेवनिर्दिशति नृपेति ४ कस्यहेतोरिति अयमर्थः कलिंकस्माद्धेतोःकेवलंनिजग्राहनतुहतवा

द्रौपदीचतदाज्ञायपतीनामनपेक्षताम् वासुदेवेभगवतिह्येकांतमतिरापतम् ५० यःश्रद्धयैतद्भगवत्प्रियाणां
पांडोःसुतानामितिसंप्रयाणम् शृणोत्यलंस्वस्त्ययनंपवित्रंलब्ध्वाहरौभक्तिमुपैतिसिद्धिम् ५१ इतिश्रीभागवते
महापुराणेप्रथमस्कंधेपांडवस्वर्गारोहणंनामपंचदशोऽध्यायः १५ सूतउवाच ततःपरीक्षिद्द्विजवर्यशि
क्षयामहींमहाभागवतःशशासह यथाहिसूत्यामभिजातकोविदाःसमादिशन्विप्रमहद्गुणस्तथा १ सउत्तर-
स्यतनयामुपयेमइरावतीम् जन्मेजयादींश्चतुरस्तस्यामुत्पादयत्सुतान् २ आजहाराश्वमेधांस्त्रीन्गंगायांभूरि
दक्षिणान् शारद्वतंगुरुंकृत्वादेवायत्राक्षगोचराः ३ निजग्राहौजसावीरःकलिंदिग्विजयेक्वचित् नृपलिंगधरंशू
द्रंघ्नंतंगोमिथुनंपदा ४ शौनकउवाच कस्यहेतोर्निजग्राहकलिंदिग्विजयेनृपः नृदेवचिन्हधृक्शूद्रःको
ऽसौगांयःपदाहनत् ५ तत्कथ्यतांमहाभागयदिकृष्णकथाश्रयम् अथवाऽस्यपदांभोजमकरंदलिहांसताम् किं
मन्यैरसदालापैरायुषोयदसद्व्ययः ६ क्षुद्रायुषांनृणामंगमर्त्यानामृतमिच्छताम् इहोपहूतोभगवान्मृत्युःशामि
त्रकर्मणि ७

न् यतोऽसौशूद्रः कुः अतिकुत्सितः योगांपदाऽहनत् अहन्निति ५ अस्यविष्णोःपदांभोजयोर्योमकरंदः तंलिहंतिआ
स्वादयंतियेतेषांसतांमहतांवाकथाश्रयमितिसमासान्निकृष्टस्यानुषंगः तर्हिकथ्यतांनोचेत्किमन्यैरसद्भिरालापैः यत् यैः आयुषोवृथाक्ष
यः ६ अस्माकमयंसत्रप्रयत्नोऽपिहरिकथाऽमृतपानार्थएवेत्याहसार्द्धाभ्याम् क्षुद्रमल्पायुर्येषाम् अतोमर्त्यानांमरणधर्मवताम् तथा
ऽपिअमृतंसत्यंमोक्षमिच्छतांयोमृत्युः सइहसत्रेशामित्रंशामित्रंकर्मपशुहिंसनंतदर्थमुपहूतः ७ ७ ७

ततः किमत आह नकश्चिदिति ततोऽपि किमत आह अहोनृलोके हरिलीलाऽमृतं वचः पायेते स्येतदर्थम् हरिलीलैवामृतं यस्मिन्तत्
८ तदभावे वृथैव जीवनमित्याह मंदस्य अलसस्य नक्तं रात्रौ यद्वयः आयुः तत्निद्रया क्षियते दिवा अन्हि च यद्वयः तद्व्यर्थकर्मभिरप-
क्षियते ९ तत्र तावत्कलिनिग्रहप्रसंगमाह यदा निजचक्रवर्त्तित्वसेनया पालिते देशे कलिंप्रविष्टं शुश्राव तदा तामनतिप्रियां वार्त्तां किं-
चित्प्रियां च युद्धकौतुकसंपत्तेः तां निशाम्य ततः शरासनं दुष्टनिग्रहार्थमाददे संयुगे शौंडिः युद्धे प्रगल्भः पाठांतरे युद्धे शौरितुल्यः १०

नकश्चिन्म्रियते तावद्यावदास्त इहांतकः एतदर्थं हि भगवानाहूतः परमर्षिभिः अहो नृलोके पीयेत हरिलीलाऽ
मृतं वचः ८ मंदस्य मंदप्रज्ञस्य वयो मंदायुषश्च वै निद्रया क्षियते नक्तं दिवा च व्यर्थकर्मभिः ९ सूत उवाच य
दा परीक्षित्कुरुजांगले वसन् कलिं प्रविष्टं निजचक्रवर्त्तिते निशम्य वार्त्तामनतिप्रियां ततः शरासनं संयुगशौंडिरा
ददे १० स्वलंकृतं श्यामतुरंगयोजितं रथं मृगेंद्रध्वजमाश्रितः पुरात् वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्वि
जयाय निर्गतः ११ भद्राश्वं केतुमालं च भारतं चोत्तरान्कुरून् किंपुरुषादीनि सर्वाणि विजित्य जगृहे बलिम् १२
तत्र तत्रोपशृण्वानः स्वपूर्वेषां महात्मनाम् प्रगीयमानं च यशः कृष्णमाहात्म्यसूचकम् १३ आत्मानं च परित्रात
मश्वत्थाम्नोऽस्त्रतेजसः स्नेहं च वृष्णिपार्थानां तेषां भक्तिं च केशवे १४ तेभ्यः परमसंतुष्टः प्रीत्युज्जृंभितलोचनः
महाधनानि वासांसि ददौ हारान्महामनाः १५ सारथ्यपारषदसेवनसख्यदौत्यवीरासनानुगमनस्तवनप्रणामम्
स्निग्धेषु पांडुषु जगत्प्रणतिं च विष्णोर्भक्तिं करोति नृपतिश्चरणारविंदे १६

ततश्च दिग्विजयाय निर्गतः ११ भद्राश्वादीनि पूर्वप-
श्चिमदक्षिणोत्तरतः समुद्रलग्नानि वर्षाणि मेरोः सर्वतः इलावृतम् तत उत्तरतो रम्यकं हिरण्मयं च दक्षिणतो हरिवर्षं किंपुरुषं च तानि विजित्य
१२ प्रगीयमानं यशः यशआदीनि शृण्वन् तेभ्यो ददाविति तृतीयेनान्वयः १३ १४ १५ किंच स्निग्धेषु पांडवेषु विष्णोर्यानि सारथ्यादीनि
कर्माणि तानि शृण्वन् तथा विष्णोः जगत्कर्तृकां प्रणतिं च शृण्वन् नृपतिः परीक्षित् विष्णोश्चरणारविंदे भक्तिं करोति स्म पारषदमिति रे-
फषकारयोर्विश्लेषश्छांदसः तत्र पार्षदं सभापतित्वम् सेवनं चित्तानुवृत्तिः वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् १६ छ॰

वृत्तिमनुवर्त्तमानस्यसतः नातिदूरेशीघ्रमेव १७ धर्मोवृषरूपः विच्छायांहतप्रभाम् गांगोरूपांपृथ्वीम् विवत्सांनष्टापत्याम् १८ ते
आत्मनोदेहस्ययद्यपिबहिरामयोनलक्ष्यते तथाऽपिअंतर्मध्येआधिःपीडायस्यास्तांत्वामालक्षये केन यतोविच्छायासि अतईषत्
म्लायतावैवर्ण्यंभजतामुखेनलिंगेन तत्रकारणानिकल्पयन्पृच्छति दूरेबंधुमित्यादिपंचभिः दूरेस्थितंबंधुम् १९ त्रिभिःपदैर्न्यूनम
तएवैकपादम् मामांमल्लक्षणंजनमित्यर्थः वृषलैः इतऊर्ध्वंभोक्ष्यमाणम् पुंस्त्वमात्मपदविशेषणत्वात् हृतायज्ञभागायेषांतान् य
ज्ञाद्यकरणात् २० हेउर्विपृथ्वि भर्तृभिररक्ष्यमाणाः स्त्रियः पितृभिररक्ष्यमाणान्बालान् प्रत्युततैरेवनिर्दयैरिव आर्त्तान्क्लिष्टा

तस्यैवंवर्त्तमानस्यपूर्वेषांवृत्तिमन्वहम् नातिदूरेकिलाश्चर्यंयदासीतन्निबोधमे १७ धर्मःपदैकेनचरन्विच्छा
यामुपलभ्यगाम् पृच्छतिस्माश्रुवदनांविवत्सामिवमातरम् १८ कच्चिद्भद्रेऽनामयमात्मनस्तेविच्छायाऽसिम्ला
यतेषन्मुखेन आलक्षयेभवतीमंतराधिंदूरेबंधुंशोचसिकंचनांब १९ पादैर्न्यूनंशोचसिमैकपादमात्मानंवावृ
षलैर्भोक्ष्यमाणम् अथोसुरादीन्हृतयज्ञभागान्प्रजाउतस्विन्मघवत्यवर्षति २० अरक्ष्यमाणाःस्त्रियउर्विबा
लान्शोचस्यथोपुरुषादैरिवार्त्तान् वाचंदेवींब्रह्मकुलेकुकर्म्मण्यब्रह्मण्येराजकुलेकुलाग्र्यान् २१ किंक्षत्र
बंधून्कलिनोपसृष्टान्राष्ट्राणिवातैरवरोपितानि इतस्ततोवाऽशनपानवासस्नानव्यवायोन्मुखजीवलोकम्
२२ यद्वांबतेभूरिभरावतारकृतावतारस्यहरेर्धरित्रि अंतर्हितस्यस्मरतीविसृष्टाकर्म्माणिनिर्वाणविलंबितानि
२३ इदंममाचक्ष्वतवाधिमूलंवसुंधरेयेनविकर्शिताऽसि कालेनवातेबलिनांबलीयसासुरार्चितंकिंहृतमंब-
सौभगम् २४

न् वाचंदेवींसरस्वतींकुकर्मणिदुराचारेस्थितानाम् कुलाग्र्यान्ब्राह्मणोत्तमान्सेवकान् २१ उपसृष्टान्व्याप्तान्
अवरोपितानिउद्वासितानि व्यवायोमैथुनम् इतस्ततःनिषेधानादरेणसर्वतोऽशनादिषून्मुखंप्रवर्त्तमानंजीवलोकंवा २२ हेअंब
मातः हेधरित्रि तेतवयोभूरिभारः तस्यावतारणार्थंकृतावतारस्यकर्माणिस्मरंतीतेनविसृष्टासतीशोचसि निर्वाणंविलंबितमुपह
सितंयैः मोक्षादप्यधिकसुखानीत्यर्थः २३ हेअंबतेसौभाग्यंकालेनवाहृतम् २४ ५ ६ ५

भवान् जानात्येव तथाऽपि वक्ष्यामीत्याह येन हेतुभूतेन त्वं चतुर्भिः पदैर्वर्त्तसे यत्र च सत्त्वादयो गुणा न क्षीयंते तेन त्वया निवासेन रहितं लोकं शोचामीति षड्भिरन्वयः २५ सत्यं यथार्थभाषणम् शौचं शुद्धत्वम् दया परदुःखासहनम् क्षांतिः क्रोधप्राप्तौ चित्तसंयमनम् त्यागः अर्थिषु मुक्तहस्तता संतोषः अलंबुद्धिः आर्जवम् अवक्रता शमो मनोनैश्चल्यम् दमो बाह्येंद्रियनैश्चल्यम् तपः स्वधर्मः साम्यम् अरिमित्राद्यभावः तितिक्षा पराऽपराधसहनम् उपरतिर्लाभप्राप्तावौदासीन्यम् श्रुतं शास्त्रविचारः २६ ज्ञानम् आत्मविषयम् विरक्तिर्वैतृष्ण्यम् ऐश्वर्यं नियंतृत्वम् शौर्यं संग्रामोत्साहः तेजः प्रभावः बलं दक्षत्वम् स्मृतिः कर्त्तव्यार्थानुसंधानम् स्वातंत्र्यम् अपराधीनता कौशलं क्रियानिपुणता कांतिः सौंदर्यम् धैर्यम् अव्याकुलता मार्दवं चित्ताकाठिन्यम् २७ प्रागल्भ्यं प्रतिभातिशयः प्रश्रयो विनयः शीलं सुस्वभावः सह

धरण्युवाच भवान् हि वेद तत्सर्वं यन्मां धर्मानुपृच्छसि चतुर्भिर्वर्त्तसे येन पादैर्लोकसुखावहैः २५ सत्यं शौचं दया क्षांतिस्त्यागः संतोष आर्जवम् शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् २६ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः स्वातंत्र्यं कौशलं कांतिर्धैर्यं मार्दवमेव च २७ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः गांभीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः २८ एते चान्ये च भगवन्नित्या यत्र महागुणाः प्रार्थ्या महत्त्वमिच्छद्भिर्न वियंति स्म कर्हिचित् २९ तेनाहं गुणपात्रेण श्रीनिवासेन सांप्रतम् शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ३० आत्मानं चानुशोचामि भवंतं चामरोत्तमम् देवान् पितॄनृषीन् साधून् सर्वान् वर्णांस्तथाऽऽश्रमान् ३१ ब्रह्मादयो बहुतिथं यदपांगमोक्षकामास्तपः समचरन् भगवत्प्रपन्ना सा श्रीः स्ववासमरविंदवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ३२

ओजो बलानि मनसः ज्ञानेंद्रियाणां कर्मेंद्रियाणां च पाटवानि भगः भोगास्पदत्वम् गांभीर्यम् अक्षोभ्यत्वम् स्थैर्यम् अचंचलता आस्तिक्यं श्रद्धा कीर्तिर्यशः मानः पूज्यत्वम् अनहंकृतिः गर्वाभावः २८ एते एकोनचत्वारिंशत् अन्ये च ब्रह्मण्यत्व शरण्यत्वादयो महांतो गुणा यस्मिन्नित्याः सहजाः न वियंति न क्षीयंते स्म २९ तेन गुणपात्रेण गुणालयेन पाप्मना पापहेतुना ३० ३१ तस्य विरहो दुःसह इत्याह चतुर्भिः ब्रह्मादयो यस्याः श्रियः अपांगमोक्षः स्वस्मिन् दृष्टिपातः तत्कामाः संतः बहुतिथं बहुकालं तपः समचरन् सम्यक् चरंति स्म भगवद्भिरुत्तमैः प्रपन्ना आश्रिता अपि सा श्रीः यस्य पादलावण्यमलम् अनुरक्ता सती सेवते ३२ ७ ७

तस्य भगवतः श्रीमद्भिः पदैः केतुर्ध्वजः अब्जादयः केतास्त्रिह्नानि येषां तैः यद्वा अब्जादीनामाश्रयैः सम्यगलंकृतमंगं यस्याः साऽहं ततो भगवतो विभूतिं संपदमुपलभ्य प्राप्य त्रीन् लोकान् अतिक्रम्य अरोचे शोभितवत्यस्मि पश्चात्तस्या विभूतेरंते नाशकाले प्राप्ते सति उत्स्मयं तीं गर्वं कुर्वाणां मां सव्यसृजत् त्यक्तवान् ३३ किंच यो वै असुरो वंशो येषां तेषां राज्ञामक्षौहिणीशतरूपं ममातिभरं भारमपनीतवान् त्वां च ऊनपदं त्वा दुःस्थं संतं पौरुषेण पुरुषकारेण आत्मनि स्वस्मिन् संपूर्णपदं सुस्थं संपादयन् लक्षणहेत्वोः क्रियाया इति हेतौ शतृप्रत्ययः संपादयितुमित्यर्थः अबिभ्रत् धृतवानित्यर्थः ३४ तस्य विरहं का वा सहेत प्रेमावलोकश्च रुचिरस्मितं च वल्गुजल्पश्च तैः मधुमानिनी

तस्याहमब्जकुलिशांकुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलंकृतांगी त्रीनत्यरोच उपलभ्य ततो विभूतिं लोकान् स मां व्यसृजदुत्स्मयतीं तदंते ३३ यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतंत्रः त्वां दुःस्थमूनपदमात्मनि पौरुषेण संपादयन् यदुषु रम्यमबिभ्रदंगम् ३४ का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदंघ्रिविटंकितायाः ३५ तयोरेवं कथयतोः पृथिवीधर्मयोस्तदा परीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ३६ इति श्रीभागवते महापुराणे प्रथमस्कंधे पृथ्वीधर्मसंवादो नाम षोडशोऽध्यायः १६ सूत उवाच तत्र गोमिथुनं राजा हन्यमानमनाथवत् दंडहस्तं च वृषलं ददृशे नृपलांछनम् १ वृषं मृणालधवलं मेहंतमिव बिभ्यतम् वेपमानं पदैकेन सीदंतं शूद्रताडितम् २

नां सत्यभामादीनां समानं गर्वसहितं स्थैर्यं स्तब्धत्वं यः अहरत् यस्यांघ्रिणा रजस्सु स्थितेन विटंकितायाः अलंकृतायाः सस्यादिमिषेण रोमोत्सवो भवति ३५ कथयतोः सतोः प्राचीं पूर्ववाहिनीं कुरुक्षेत्रे ३६ इति प्रथमस्कंधे टीकायां षोडशोऽध्यायः १६ ततः सप्तदशे राज्ञा कलेर्निग्रह उच्यते तस्यैवं वीर्यभाजोऽपि वैराग्यं वक्तुमद्भुतम् १ हन्यमानं ताड्यमानम् १ मृणालं पद्मकंदः तद्वत् धवलम् भयात् मेहंतं मूत्रयंतम् इवेत्यनेन पादावशेषो धर्मो भयात् मूत्रयन्निव प्रतिक्षणं क्षीयमाणांशः तस्याप्यनिर्वाहात् कंपमान इवेति दर्शितम् २ ७ ७ ७

धर्मदुघां हविर्दोग्ध्रीम् क्षामां कृशाम् यवसं तृणम् अत्रसस्यादिप्रसवक्षयाद्दिवत्सेव यज्ञाद्यभावात्कृशा अतएव यज्ञभागमिच्छंतीं पृथ्वीति सूचितम् ३ कार्त्तस्वरं सुवर्णं तत्कृतः परिच्छदः परिकरो यस्य स्वर्णनिबद्धमित्यर्थः सज्जीकृतकार्मुकः ४ हिंसिघातयसि राजाऽहमिति चेत्तत्राह नट इव वेषमात्रेण नरदेवोऽसि कर्मणा तु अद्विजः शूद्रः ५ अशोच्यान्निरपराधान् रहसि यस्त्वं प्रहरन् प्रहरसि स शोच्यः सापराधोऽसि अतो वधमर्हसि ६ वृषं प्रत्याह त्वं वा कः स्वयमेव संभावयति किं कश्चिद्देवो वृषरूपेणास्मान् परिखेद

गां च धर्मदुघां दीनां भृशं शूद्रपदाहताम् विवत्सां साश्रुवदनां क्षामां यवसमिच्छतीम् ३ पप्रच्छ रथमारूढः कार्त्तस्वरपरिच्छदम् मेघगंभीरया वाचा समारोपितकार्मुकः ४ कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान्बली नरदेवोऽसि वेषेण नटवत्कर्मणाऽद्विजः ५ कस्त्वं कृष्णे गते दूरं सह गांडीवधन्वना शोच्योऽस्यशोच्यान् रहसि प्रहरन्वधमर्हसि ६ त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ७ न जातु पौरवेंद्राणां दोर्दंडपरिरंभिते भूतलेऽनुपतंत्यस्मिन्विना ते प्राणिनां शुचः ८ मा सौरभेयात्र शुचो व्येतु ते वृषलाद्भयम् मा रोदीरंब भद्रं ते खलानां मयि शास्तरि ९ यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यंते साध्व्यसाधुभिः तस्य मत्तस्य नश्यंति कीर्तिरायुर्भगो गतिः १० एष राज्ञां परो धर्मो ह्यार्त्तानामार्त्तिनिग्रहः अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ११ कोऽवृश्चत्तव पादांस्त्रीन्सौरभेय चतुष्पदः मा भूवंस्त्वादृशा राष्ट्रे राज्ञां कृष्णानुवर्त्तिनाम् १२

यन्नु वर्त्तसे ७ दोर्दंडैः परिरंभिते विधिवत्संरक्षिते ते शुचः अश्रूणि विना अन्येषामश्रूणि नानुपतंतीति खेदहेतुत्वं दर्शितम् ८ एवमुक्ते पुनरपि शोचंतं प्रत्याह भोः सुरभेः पुत्र मा शुचः शोकं माकुरु व्येतु अपयातु गां प्रत्याह अंब मातः शास्तरि मयि जीवति सति ते भद्रमेव अतो मा रोदीः ९ मद्धितार्थमेवैनं हनिष्यामि न तवोपकारायेत्याह यस्येति द्वाभ्याम् हे साध्वि सर्वाः याः काश्चिदपीत्यर्थः असाधुभिः त्रस्यंते पीड्यंत इत्यर्थः भगो भाग्यम् गतिः परलोकः १० ११ पुनरपि शोचंतं वृषं प्रत्याह कः अवृश्चत् चिच्छेद त्वादृशाः त्वद्विधाः दुःखिताः १२ ५ ५ ५

वोभद्रमस्तु आत्मनस्तवपादच्छेदेनवैरूप्यंकृतवंतम् कीर्तिंदूषयतीतितथातमाख्याहि ननुतदाख्यानेकृतेकथंभद्रंस्यादित्यतआह य
स्मादनागसिजनेयः अघंदुःखंयुंजन्कुर्वन्भवति अस्यएवंभूतस्यमत्तःसकाशात्सर्वत्रापिभयंभवति ततःसाधूनांभद्रंभवेदेवेति १३
एतस्यदंडेअहमसमर्थइतिमाशंकारित्याह अनागस्विति आगस्कृत्अपराधकर्त्ता तस्यामर्त्यस्यदेवस्यापिभुजमाहर्त्ताऽस्मि आहरि
ष्यामि सांगदमित्यनेनमूलतउत्साट्याहरिष्यामीतिदर्शितम् १४ नन्वेकस्यनिग्रहेणान्यस्यानुग्रहेतवकिंप्रयोजनंतत्राह राज्ञोहीति
अन्यान्अधर्मिष्ठान्शासतःदंडयतः १५ आर्त्तानामभयंयस्मात्तद्वचोवोयुष्माकंयुक्तमुचितमेव १६ वयंतुयतःपुरुषात्प्राणिनांक्लेशाहे

आख्याहिवृषभद्रंवःसाधूनामकृतागसाम् आत्मवैरूप्यकर्त्तारंपार्थानांकीर्तिदूषणम् जनेऽनागस्यघंयुंजन्
सर्वतोऽस्यचमद्भयम् १३ अनागःस्विहभूतेषुयआगस्कृन्निरंकुशः आहर्त्ताऽस्मिभुजंसाक्षादमर्त्यस्यापिसां
गदम् १४ राज्ञोहिपरमोधर्मःस्वधर्मस्थानुपालनम् शासतोऽन्यान्यथाशास्त्रमनापद्युत्पथानिह १५ धर्म
उवाच एतद्वःपांडवेयानांयुक्तमार्त्ताभयंवचः येषांगुणगणैःकृष्णोदौत्यादौभगवान्कृतः १६ नवयं
क्लेशबीजानियतःस्युःपुरुषर्षभ पुरुषंतविजानीमोवाक्यभेदविमोहिताः १७ केचिद्विकल्पवसनाआहुरा
त्मानमात्मनः दैवमन्येऽपरेकर्मस्वभावमपरेप्रभुम् १८ अप्रतर्क्यादनिर्देश्यादितिकेष्वपिनिश्चयः अत्रानु
रूपंराजर्षेविमृशस्वमनीषया १९ एवंधर्मेप्रवदतिससम्राड्द्विजसत्तम समाहितेनमनसाविखेदःपर्यचष्ट
तं २०

तयोभवेयुः तंपुरुषंनविजानीमः यतःवादिनांवाक्यभेदैर्विमोहिताः १७ वाक्यभेदानेवाह विकल्पंभेदंवसतेआच्छादयं
तियेयोगिनः तेआत्मानमेवात्मनः प्रपंचस्यदुःखप्रदमाहुः तदुक्तम् आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनइति यद्वा विकल्पैःकुत
र्कैः प्रावृताः नास्तिकाः एवंहितेवदंति नतावद्देवतादीनांप्रभुत्वंकर्माधीनत्वात् नचकर्मणःस्वाधीनत्वात् अतःस्वयमेवप्रभुर्नचान्यः
कश्चिदिति अन्येदैवज्ञाः दैवंग्रहादिरूपांदेवताम् परेतुमीमांसकाः कर्मअपरेलोकायतिकाःस्वभावम् १८ केष्वपिसेश्वरेषुमध्ये
केष्वपीतिदुर्लभत्वंदर्शितम् निश्चयइतिसिद्धांतत्वम् अप्रतर्क्यात्मनोऽगोचरादनिर्देश्यात्वचनागोचरात्परमेश्वरात्सर्वंभवतीतिवि
मृशविचारयस्वबुद्ध्या १९ विखेदःगतमोहःपर्यचष्टप्रत्यभाषत ज्ञातवानितिवा २० ७ ७ ७

अनिर्द्धारितमिवब्रुवन्घातकंजानन्नपिनसूचयेदित्येवंरूपंधर्मंब्रवीषि अतोधर्मोऽसि सूचनेकोदोषइत्यत आह यदिति स्थानंनर कादि २१ यद्वा अज्ञानादप्यकथनंभवतीत्याह अथवेति देवस्यमायायागतिर्वध्यघातकलक्षणावृत्तिर्भूतानांचेतसोवचसश्चागोच रास्तज्ज्ञेयानभवतिइतिनिश्चयः २२ धर्मोऽसावितिज्ञात्वातस्यपादानुवादेनव्यवस्थामाह तपइतिद्वाभ्याम् अधर्मपादैस्तवत्रयःपादा स्त्रिभिरंशैर्भग्नाः स्मयोविस्मयः २३ इदानींकलौहेधर्मतेपादः चतुर्थोंऽशः तत्रापिसत्यमेवास्ति यतःसत्यात्भवानात्मानंनिर्वर्त्तयेत् कथंचिद्धारयेत् यद्वा पुरुषस्त्वांसाधयेत् तमपिपादमनृतेनसंवर्द्धितः कलिरूपोऽयमधर्मोग्रहीतुमिच्छति तत्रेयंस्थितिः कृतयुगेप्रथ

धर्मंब्रवीषिधर्मज्ञधर्मोऽसिवृषरूपधृक् यदधर्मकृतःस्थानंसूचकस्यापितद्भवेत् २१ अथवादेवमायाया नूनंगतिरगोचरा चेतसोवचसश्चापिभूतानामितिनिश्चयः २२ तपःशौचंदयासत्यमितिपादाःप्रकीर्तिताः अधर्मांशैस्त्रयोभग्नाःस्मयसंगमदैस्तव २३ इदानींधर्मपादस्तेसत्यंनिर्वर्त्तयेद्यतः तंजिघृक्षत्यधर्मोऽय मनृतेनैधितःकलिः २४ इयंचभूर्भगवतान्यासितोरुभरासती श्रीमद्भिस्तत्पदन्यासैःसर्वतःकृतकौतुका २५ शोचत्यश्रुकलासाध्वीदुर्भगेवोज्झिताऽधुना अब्रह्मण्यानृपव्याजाःशूद्राभोक्ष्यंतिमामिति २६ इति धर्मंमहींचैवसांत्वयित्वामहारथः निशातमाददेखड्गंकलयेऽधर्महेतवे २७ तंजिघांसुमभिप्रेत्यविहायनृ पलांछनम् तत्पादमूलंशिरसासमगाद्भयविह्वलः २८ पतितंपादयोर्वीक्ष्यकृपयादीनवत्सलः शरण्योना वधीच्छ्लोक्यआहचेदंहसन्निव २९ राजोवाच नतेगुडाकेशयशोधराणांबद्धांजलेर्वैभयमस्तिकिंचित् नवर्त्तितव्यंभवताकथंचनक्षेत्रेमदीयेत्वमधर्मबंधुः ३०

मेसंपूर्णश्चतुष्पाद्धर्मः त्रेतायांचतुर्णामपिपादानांमध्येस्मयेनतपः संगेनशौचम् मदेनदया अनृतेनसत्यमिति एवंचतुर्थेंशोहीयते द्वापरेत्वर्द्धम् कलौचतुर्थोंऽशोऽवशिष्यतेसोऽपिअंतेनंक्ष्यतीति २४ न्यासितः अन्योऽन्यद्वारेणावतारितः उरुर्भरोभारोयस्याः कृतंकौतुकंमंगलंयस्याःसा २५ अश्रूणिकलयतिमुंचतीत्यश्रुकला तेनत्य क्तासतीशूद्राभोक्ष्यंतिमामितिशोचति २६ निशातंनिशितम् अधर्मस्यहेतुर्यःकलिस्तंहंतुमित्यर्थः २७ अभिप्रेत्यज्ञात्वा २८ शरण्यः आश्रयार्हः श्लोक्यःसत्कीर्त्यर्हः २९ गुडाकेशोऽर्जुनः तस्ययशोधरायेवयंतेषाम् तान्प्रतिबद्धोऽजलिर्येनतस्यते किंतु कथंचनकेनाप्यंशेन नवर्त्तितव्यम् यस्मात्त्वमधर्मस्यबंधुः ३०

तदेवाह राजदेहेषुवर्त्तमानंत्वामनुसर्वतः प्रवृत्तः अनार्यंदौर्जन्यम् अंहः स्वधर्मत्यागः ज्येष्ठाअलक्ष्मीः मायाकपटम् ३१ तत्तस्मा
त्वर्त्तितव्येवर्त्तितुमर्हेब्रह्मावर्त्तेदेशो यज्ञस्यवितानंविस्तारः तत्रविज्ञाः निपुणाः ३२ इज्यायागस्तद्रूपामूर्त्तिर्यस्यशंक्षेमम् कामांश्च
नन्विंद्रादयोदेवाइज्यंतेनतुहरिस्तत्राह एषःस्थावरादीनामात्मेति तथाऽपिजीववन्नपरिच्छिन्नइत्याह अंतर्बहिरिति यथावायुः
प्राणरूपेणांतस्थोऽपिबहिरप्यस्ति तद्वत्सर्वांतर्यामीश्वरोऽपीति ३३ उद्यतासिमुद्धृतखड्गं दंडपाणिंयमम् उद्यतमुद्युक्तम् ३४ अ
त्रनवस्तव्यमितियातवाज्ञातयायत्रक्वापिवत्स्यामिकिंतुतत्रतत्रापिआत्तः गृहीतः इषुः शरासनंचयेनतंत्वामेवलक्षये ३५ तत्तस्मा-

त्वांवर्त्तमानंनरदेवदेहेष्वनुप्रवृत्तोऽयमधर्मपूगः लोभोऽनृतंचौर्यमनार्यमंहोज्येष्ठाचमायाकलहश्चदंभः
३१ नवर्त्तितव्यंतदधर्मबंधोधर्मेणसत्येनचवर्त्तितव्ये ब्रह्मावर्त्तेयत्रयजंतियज्ञैर्यज्ञेश्वरंयज्ञवितानविज्ञाः
३२ यस्मिन्हरिर्भगवानिज्यमानइज्यामूर्त्तिर्यजतांशंतनोति कामानमोघान्स्थिरजंगमानामंतर्बहिर्वायु
रिवैषआत्मा ३३ सूतउवाच परीक्षितैवमादिष्टःसकलिर्जातवेपथुः तमुद्यतासिमाहेदंदंडपाणि
मिवोद्यतम् ३४ यत्रक्वचनवत्स्यामिसार्वभौमतवाज्ञया लक्षयेतत्रतत्रापित्वामात्तेषुशरासनम् ३५
तन्मेधर्मभृतांश्रेष्ठस्थानंनिर्देष्टुमर्हसि यत्रैवनियतोवत्स्येआतिष्ठंस्तेऽनुशासनम् ३६ सूतउवाच
अभ्यर्थितस्तदातस्मैस्थानानिकलयेददौ द्यूतंपानंस्त्रियःसूनायत्राधर्मश्चतुर्विधः ३७

न्नियतोनिश्चलोवत्स्यामि
३६ पानंमद्यादेः सूनाः प्राणिवधाः द्यूतेअनृतम् पानेमदः पूर्वंमदोदयानाशकत्वेनोक्तः अत्रतुगर्वद्वारातपोनाशकत्वेनस्त्रीषुसं
गः हिंसायांक्रौर्यंदयानाशकमितिज्ञेयम् यद्यपिसर्वंसर्वत्रसंभवति तथाऽपिप्राधान्येनानृतादीनांद्यूतादिषुयथासंख्यंज्ञेयम् द्वा
दशस्कंधेतु सत्यंदयातपोदानमितिपादाविभोर्नृपइत्यत्र दानशब्देनशौचमेवोक्तम् मनःशुद्धिरूपत्वाद्भूताभयदानस्य त्रेतायांध
र्मपादानांतुर्यांशोहीयतेशनैः अधर्मपादैरनृतहिंसाऽसंतोषविग्रहैरित्यत्रचअसंतोषशब्देनतस्यहेतुःगर्वोलक्ष्यते विग्रहशा-
ब्देनचतद्धेतुः स्त्रीसंगइत्यविरो[illegible] ३७

चतुर्विधस्याप्येकत्रैवावस्थानंदेहीतिपुनर्याचमानायजातरूपंसुवर्णंदत्तवान् ततःसुवर्णदानात् अनृतंमदंकाममितिस्त्रीपुंसं
गम् रजइतिनिरजोमूलांहिंसाम् एतानिचत्वारिपंचमंवैरंचादादिति ३८ औत्तरेयेणपरीक्षिताअमूनिअमूषुस्थानेषुन्यवसदि
त्यर्थः ३९ अथइतिहेतोः बुभूषुःउद्भवितुमिच्छुःस्त्रीसुवर्णयोरसेवनंनामतयोरनासक्तिः ४० एवंकलिंनिगृह्यवृषस्यपादान्
प्रतिसंदधे तपआदीनिप्रवर्त्तितवानित्यर्थः ४१ युष्मदीयसत्रप्रवृत्तिरपितत्प्रभावादेवेत्याहत्रिभिः एतर्हिइदानींयुधिष्ठिरेणार
ण्यंप्रवेष्टुमिच्छताउपन्यस्तंसमर्पितमासनमध्यास्ते ४२ अधुनासांप्रतमास्ते पालयतइतिवर्त्तमानसामीप्येवर्त्तमानवन्निर्देशः

पुनश्चयाचमानायजातरूपमदात्प्रभुः ततोऽनृतंमदंकामंरजोवैरंचपंचमम् ३८ अमूनिपंचस्थानानि
ह्यधर्मप्रभवःकलिः औत्तरेयेणदत्तानिन्यवसत्तन्निदेशकृत् ३९ अथैतानिनसेवेतबुभूषुःपुरुषःक्व
चित् विशेषतोधर्मशीलोराजालोकपतिर्गुरुः ४० वृषस्यनष्टांस्त्रीन्पादांस्तपःशौचंदयामिति प्रतिसंद
धआश्वास्यमहींचसमवर्द्धयत् ४१ सएषएतर्ह्यध्यास्तेआसनंपार्थिवोचितम् पितामहेनोपन्यस्तंराज्ञा
ऽरण्यंविविक्षता ४२ आस्तेऽधुनासराजर्षिःकौरवेंद्रश्रियोल्लसन् गजाह्वयेमहाभागश्चक्रवर्त्तीबृहच्छ्र
वाः ४३ इत्थंभूतानुभावोऽयमभिमन्युसुतोनृपः यस्यपालयतःक्षोणींयूयंसत्रायदीक्षिताः ४४ इ
तिश्रीभागवतेमहापुराणेप्रथमस्कंधेकलिनिग्रहोनामसप्तदशोऽध्यायः १७ सूतउवाच योवैद्रौ
ण्यस्त्रविप्लुष्टोनमातुरुदरेमृतः अनुग्रहाद्भगवतःकृष्णस्याद्भुतकर्मणः १ ब्रह्मकोपोत्थिताद्यस्तुतक्षका
त्प्राणविप्लवात् नसंमुमोहोरुभयाद्भगवत्यर्पिताशयः २

स्मेत्यध्याहारोवा ४३ सत्रायसत्रंकर्त्तुंदीक्षिताःदीक्षां
कृतवंतः ४४ इतिप्र॰टी॰सप्तदशोऽध्यायः १७ राज्ञस्त्वष्टादशेतस्यब्रह्मशापोनिरूप्यते सचानुग्रहएवास्यजातोवैराग्यमावहन्
१ परीक्षितोनिर्याणमत्याश्चर्यंवक्तुंतत्संभावनायजन्माश्चर्यमनुस्मारयति योवाइति विप्लुष्टोनिर्दग्धःसन् १ ब्रह्मकोपादुत्थितात्तक्ष
कात् यःप्राणविप्लवःप्राणनाशः तस्माद्यदुरुभयंतस्मान्नसंमुमोह तत्रहेतुः यस्तुभगवत्येवार्पिताशयइति २

